# भावगीतम्

श्री सुरेन्द्रनाथवर्मविरचितम्

वर्मा - सदन

३७२/२५, स्कन्दपुरी

सिविल लाइन्स, झाँसी (उ० प्र०)

पिन – २८४००१

प्रथम संस्करणम्–1993

# भावगीतम्

* * *

# किमपि वाग्वैशिष्ट्यम्

इदं भावगीतमिति किंकाव्यं विपश्चिद्भ्यः सद्भ्यः सप्रश्रयमुपायनीकुर्वता वाग्विशेषाभावेऽपि किमपि विवक्षुत्वात् प्रस्तूयते । प्रत्यहमेव दूरदर्शनप्रेक्षणेषु, आकाशवाणीप्रसारणेषु, वार्तापत्रेषु आततायिभिः क्रियमाणं निर्घृणं हिंसाकर्म, गृहदाहं, बलात्कारं, यौतकप्रियैर्निरीह वधूहविष्यैः सम्पाद्यमानं नारीमेधं, अर्थाभावात् कन्याभिर्विधीयमानमात्मदाहं, धर्मध्वजिभिर्बालिशान् कुमार्गे नीयमानत्वं, साम्प्रदायिकैर्धर्मान्धैर्मिथः संवर्धयमानं वैरभावं, विशालयन्त्रैरहर्निशमुद्दीर्यमाणं विषाक्तधूमाडम्बरं, पूतिगन्धप्रचुरैः रसायनविषसम्मिश्रैः पयः कर्दमप्रवाहैर्हालाहलीयमानं सरिज्जलं, गृहनिर्माणाय रसवत्यामिन्धनप्रयोगाय चानिशं क्रियमाणमरण्यानीविनाशं, प्रतिभाजुषां विदुषां स्वदेशं विहाय धनलिप्सयान्यत्र प्रव्रजनं, विद्या गुरूणामज्ञानतिमिरनिवारणायं भृशं परिदृष्यमानं प्रश्लथीभावं, जनानां भारतीयसंस्कृति प्रति जायमानमौदासीन्यं, जननेतृणामाचारभ्रष्टतां, प्रवर्धमानकलिशासनं, अन्यदप्यनीतिकरं किमपि सर्वत्र घटमानं दुर्भगं दर्शं दर्शं, श्रावं श्रावं, भावं भावं, मन्दस्यापि मे हृदि यद्भावजातमुचित मनुचितं वा प्रादुर्भूतं तदेवात्र किमपि मया समायोजि ।

माधवो निजभक्तं मूकमपि वाचालं करोति । समुल्लंघितमशीत्युत्तरवर्षमितं वयो मनसा वचसा कर्मणा मन्दश्चिरमवधृतमौनोऽपि यदहममन्द इव वाचालो जातस्तत्र प्रबलतमो हेतुर्न माधवभक्तिः परं कलेः सर्वत्र सातिशयं परिव्याप्तं साम्राज्यमेव ! पयः पूरं प्रबलतममवरोद्धुं निजाक्षमतां जानतापि तृणेन कोऽपि यत्नो क्रियते तथैव मयापि काव्येऽस्मिन्नकारि ।

गीर्वाणिवाण्यां विशेषत: पद्यरचनायामनभ्यासाच्च्युत-संस्कृतिप्रभृतिदोषबाहुल्यं कामं भवतु, परं भाव जात मस्मदीयं चेद् विदुषां हृदयं कृमिक्लिष्टमणिरिव किमपि समाकर्षति, तर्हि श्रमो मे कृतार्थो जात इत्येव किं न परितोषाय !

कविसरणीमनुसरता स्खलनभूरित्वं बोबुध्यमानेनापि विद्वद्भि: समाधानमिच्छता मया भूयोऽपि साम्प्रतं मौन-मेवालम्ब्यते । महाकवे: कालिदासस्य सूक्तिं स्मरता च निवेद्यते —

तं (तत्) सन्त: श्रोतुमर्हन्ति सदसद्व्यक्तिहेतव: ।
हेम्न: संल्लक्ष्यते ह्यग्नौ विशुद्धि: श्यामिकापिवा ॥इति

वसन्त पञ्चमी
२१-०१-१९९१

विदुषां वशंवद:
सुरेन्द्रनाथो वर्मा

# १. भावकवन्दम्

जयन्ति ते कृतात्मानः कवयो यैः प्रणोदिताः ।
प्रमाष्टुं सज्जना अश्रु नेत्राभ्यां पीडितात्मनाम् ॥१

शिवेतरविनाशाय यैः सत्काव्यं विनिर्मितम् ।
अन्तरेणार्थवैपुल्यं तान् प्रति प्रणता वयम् ॥२

मत्वा वै विटपान्पुत्रानालिंग्य रक्षितं वनम् ।
याभिर्विच्छेदनाद्भाव ? ता वन्द्या मातृवद्भुवि ॥३

स्वातन्त्र्यसंगरे यैर्हि प्राणान्हित्वा यशोऽर्जितम् ।
प्रत्यूषे स्मरणीयास्ते वन्दनीयाश्च देववत् ॥४

एषणा निःस्पृहैर्भाव ! यैर्हुतं निजजीवितम् ।
न्यायं स्थापयितुं लोके तेऽर्हन्ति वै नमस्कृतिम् ॥५

विदेशेऽपि मनो येषां स्वदेशं प्रति सस्पृहम् ।
न चैव ग्लायति स्वप्ने तान्नुमो मातृवत्सलान् ॥६

अविद्यापाशमुच्छेत्तुं ये जाता अर्थनिःस्पृहाः ।
विद्याधनप्रदातारस्ते वन्द्या गुरवः सखे ! ॥७

सेनानीत्वं सुसम्पाद्य स्वातन्त्र्यसंगरेऽपि ये ।
ताम्रपात्रस्पृहाहीनास्ते नमस्या हि नायकाः ॥८

असाधुत्वं हि नारीणां कैश्चित्काव्ये प्रतिष्ठातम् ।
नाशितं समूलघातं यैस्ते वन्द्या कवयः सखे ! ॥९

धर्मग्लान्यै परां काष्ठां प्रदातुं ये दृढव्रताः ।
दुष्कृतः किं न ते पूज्या हर्यवतार हेतुकाः ॥१०

अबलायजनं कृत्वा यैः पुण्यं समुपार्जितम् ।
पितृभूभूतिशोभाढ्यान् तान्नुमः प्रणताञ्जलि ॥११

गुरूणां शासनं कर्तुं राष्ट्रेऽस्मिन् सुप्रतिष्ठितम् ।
शोणितैः स्नापिता यैर्भूर्दूरतस्तान् नुमो वयम् ॥१२

सरसं जाह्नवीवारि भूयः कृत्वा रसात्मकम् ।
मुक्तिमार्गः प्रशस्तो यैर्वन्दनीयाः कथं न ते ॥१३

उभावपि नमस्कार्यौ धर्मध्वजातितायिनौ ।
देहिनं मोचयत्येकश्चापरो देहमात्रकम् ॥१४

द्वावपि हि सपर्याहौं तमस्कली भवार्णवे ।
न जायते विना याभ्यां क्वापि तर्षि-कल्पना ॥१५

०—०

# २. दिवसा गताः

अपथे न पदं धत्ते, ममायं मन इत्यहो ! ।
सीतायां रमते रामस्ते हि नो दिवसा गताः ॥१

लोकस्याराधनं पूर्वं स्त्रीरञ्जनमतः परम् ।
इति दृष्टो नयो भाव ! ते हि नो दिवसा गताः ॥२

वानरा गृध्रभल्लूका ऽजाता अनयशत्रवः ।
सञ्जध्नुर्युधि रक्षांसि ते हि नो दिवसा गताः ॥३

सर्वंसहापि पृथ्वीयं सुतां वीक्ष्य तिरस्कृताम् ।
द्विधाभूता शरण्यायै ते हि नो दिवसा गताः ॥४

स्वप्ने विश्राणितं राज्यं विभाव्यावितथं नृपः ।
सर्वस्वं त्यक्तवान् भाव ! ते हि नो दिवसा गताः ॥

अंसेन पुत्र उद्वाह्य पितरावक्षिविक्लवौ ।
कारयति सुखं यात्रां ते हि नो दिवसा गताः ॥६

एतद्देशीय विप्राणं सकाशाच्चरितं स्वकम् ।
शिक्षते स्म जनाः सर्वे ते हि नो दिवसा गताः ॥७

यदा त्यागाय भूयस्त्वं यशसे विजिगीषुता ।
प्रजायै च गृहीभावस्ते हि नो दिवसा गताः ॥८

भौतिकेष्विह पिण्डेषु यदासीदनवस्थितिः ।
तेषामेकान्तनाशित्वात् ते हि नो दिवसा गताः ॥९

प्रजानां विनयाधानं भरणं पोषणं तथा ।
नृपाणां क्रियमाणानां ते हि नो दिवसा गताः ॥१०

गुरोः सुरभिरक्षायै प्राणमोहविसर्गिणाम् ।
सूर्यान्वयनृपालानां ते हि नो दिवसा गताः ॥११

ऐक्ष्वाकवो यदा राष्ट्रं चक्रेंवर्तयितुं सखे ? ।
वाजिमेधान् समातेनुस् ते हि नो दिवसा गताः ॥१२

प्रसूतित्वान्मनोरन्यान्नासन् रक्षणकांक्षिणः ।
बलिनः सूर्यवंशीयास्ते हि नो दिवसा गताः ॥१३

त्वचमुन्मथितां वीक्ष्य देवदारोर्हरप्रिया ।
रोदिति स्म दिवारात्रौ ते हि नो दिवसा गताः ॥१४

अनिष्टकारकं मत्वा पूज्यपूजाव्यतिक्रमम् ।
धेनूर्ववन्दिरे भूपास्ते हि नो दिवसा गताः ॥१५

यज्ञाश्वस्यापहर्तारं महेन्द्रमपि सङ्गरे ।
योद्धुमाह्वायमानानां ते हि नो दिवसा गताः ॥१६

हिरण्यकषिपौ शेते प्रजाः शाययति क्षितौ ।
अतो ना सिंहतां पेदे ते हि नो दिवसा गताः ॥१७

अर्थिने म्रियमाणोऽपि दन्तमुत्पाटच हैमकम् ।
अङ्गराजो ददौ भाव ! ते हि नो दिवसा गताः ॥१८

वीक्ष्य पलितमूर्धानं शूद्रमायन्तमग्रतः ।
पार्थिवोऽपि जहौ मार्गं ते हि नो दिवसा गताः ॥१९

अङ्गुल्याग्रेण पस्पर्शुः यदा चन्द्रमसं सखे ! ।
योगिनो भूमि सन्निष्ठास्ते हि नो दिवसा गताः ॥२०

वने विसर्जितां कन्यां त्यक्त्वा वैखानसव्रतम् ।
गृहीव त्रायमाणानां ते हि नो दिवसा गताः ॥२१

प्रस्थानमङ्गले वध्वः शाटीप्रान्तं समुत्सुका ।
सञ्जति स्म मृगी भाव! ते हि नो दिवसा गताः ॥२२

हरिण्यस्तत्यजुर्दूर्वां सुमनांसि द्रुमा लताः ।
नर्तनं नीलकण्ठाश्च ते हि नो दिवसा गताः ॥२३

आचीनविष याद्भाव ! बुद्धस्य प्रतिमाः सखे !
सद्धर्मं स्थापयन्ति स्म ते हि नो दिवसा गताः ॥२४

बोधिवृक्षस्य शाखाग्रं धर्मशाखेव सिंघले ।
राज्ञामारोप्यमाणानां ते हि नो दिवसा गताः ॥२५

रामायणीं कथां भाव सुमात्राबालिदेशयोः ।
श्रावयतां हि विप्राणां ते हि नो दिवसा गताः ।।२६

प्रत्युद्गम्य यदा भूपः पूजार्हं मुनिमागतम् ।
वन्दते स्म महीपातं ते हि नो दिवसा गताः ।।२७

यैः स्वधर्मस्य रक्षायै ह्यचायि प्रियदारकाः ।
सुगृहीताभिधेयानां ते हि नो दिवसा गताः ।।२८

दोलारुढाय चित्ताय दातुं स्थैर्यं स्वमस्तकम् ।
छित्वा पत्ये ददानानां ते हि नो दिवसा गताः ।।२९

विभाव्य हुतभुग्दाहं चन्दनद्रवशीतलम् ।
जौहरव्रतनिष्ठानां ते हि नो दिवसा गताः ।।३०

उत्कृत्योत्कृत्य मांसं स्वं शरणागतपक्षिणे ।
प्रयच्छन्ति स्म राजानस्ते हि नो दिवसा गताः ।।३१

महालयं परित्यज्य जीर्णोटजे सुखं वसन् ।
राष्ट्रं शशास चाणक्यस्ते हि नो दिवसा गताः ।।३२

ऋषीणां वचनात्पूर्वमर्थसिद्धिरजायत ।
कार्यकारणतां हित्वा ते हि नो दिवसा गताः ।।३३

स्वातन्त्र्यं समुपालब्धुं यष्टिघातं प्रताडिताः ।
नेतारो विजहुः प्राणान् ते हि नो दिवसा गताः ।।३४

शूलस्थोऽपि जपन्मन्त्रं वन्देमातरमव्ययम् ।
प्रियान्प्राणाञ्जहौ नेता ते हि नो दिवसा गताः ।।३५

एकान्ते गहनारण्ये सवतः श्वापदावृते ।
निर्मातॄणां शिलावेश्म ते हि नो दिवसा गताः ।।३६

विरच्याद्भुतमालेख्यं रसभावसमन्वितम् ।
उपगूहितनाम्नां वै ते हि नो दिवसा गताः ।।३७

राष्ट्ररक्षाव्रतापूर्त्यै प्राणैः कण्ठगतैरपि ।
अनङ्गीकृतदास्यानां ते हि नो दिवसा गताः ।।३८

शास्त्रचिन्ताकृतप्रेम्णां निस्पृहाणां गृहं प्रति ।
श्रीवाचस्पतिमिश्राणां ते हि नो दिवसा गताः ॥३९

भ्राता नो भ्रातरं द्वेष्टि न स्वसारमपि स्वसा ।
वधूटी चापि न श्वश्रूं ते हि नो दिवसा गताः ॥४०

उद्दीप्ते ब्रह्मवर्चस्त्वे रौद्रे राजन्यतेजसि ।
राष्ट्रसीम्नां विशालायां ते हि नो दिवसा गताः ॥४१

दुर्नये क्वापि संजाते वियोगे स्नेहिनः क्वचित् ।
नृपाणां दत्तहस्तानां ते हि नो दिवसा गताः ॥४२

पुत्राल्लब्ध्वा निकाराग्निं मुधा दाहयसे मनः ।
श्रवणस्य पितृप्रेम्णस्ते हि नो दिवसा गताः ॥४३

०—०

# ३. नारीसंविधानम्

कथ्यते हृदये गुप्ता महिला कापि विद्यते ।
कलावतां कवीनाञ्च प्रेर्यमाणा पदे पदे ॥१

महिलानामतस्तासां स्पृशन्तीनां यशोनभः ।
स्वप्रकाश-कलायोगाद् गरीयस्त्वं प्रसिद्ध्यति ॥२

ईश्वरोऽपि जगत्कार्यं निर्ममे महिला सखः । व्यं
मयोपाधि विना भाव । क्व प्रभुता क्व पूर्णता ॥३

काव्यं देवस्य यद्विश्वं न म्रियते न जीर्यते ।
मायामहिलया दत्तं तस्मै शाश्वतिकं यशः ॥४

इडा सरस्वती मही तिस्रो देव्यो मयोभुवः ।
पूजार्हाः कस्य नो सन्ति दुहितरः प्रजापतेः ॥५

सरस्वती शश्वत्सत्या गङ्गा शिवसमन्विता ।
यमुना दीप्तसौन्दर्या तिस्रो देव्यः कलाभुवः ॥६

प्रसादाद्वर्धते तासां पुरुषार्थचतुष्टयम् ।
अप्रसादाज्जगत्तासां शून्यमेवावतिष्ठते ॥७

ऊर्ध्वं द्यौर्वसुधाधस्तात् परितश्च स्थिता दिशः ।
मानवाः कुत्र गच्छेयुस्त्यक्त्वा नारीं मुमुक्षवः ॥८

गङ्गा यस्य स्थिता मूर्ध्नि ललाटे शशिनः कला ।
अर्द्धाङ्गे गिरिजा भाव ! निर्वृतिस्तस्य कीदृशी ॥९

न शक्तो दहने वह्निर्नं वायुर्हरणे क्षमः ।
तृणमपि महानारीं भाव ! हैमवतीं विना ॥१०

भक्तिर्विद्या रतिःश्रद्धा शक्ते रूपाणि तत्वतः ।
आश्रयभेदनिर्णेया नामरूपव्यवस्थितिः ॥११

सविित्री निजभर्तारं कृतान्तकेतनं गतम् ।
प्रत्यावर्तिष्ट नारीणां हेतुस्तत्र बलाढ्यता ॥१२

रामभद्रो जगज्जेता भूविवरे कृतास्पदम् ।
न पराववृते सीतां नराणामल्पसत्वतः ।।१३

सौख्यं सख्यञ्च साचिव्यं गार्हस्थ्यमथ शिष्यता ।
प्रसिद्ध्यति यया भाव ! कदनार्हा कथं नु सा ।।१४

कमपूर्वं महानन्दं लभन्ते यौतकप्रियाः ।
लिह्यमानां वधूं वीक्ष्य जिह्वया कृष्णवर्त्मनः ।।१५

हन्यमानां निभाल्याग्रे वधूं यौतककांक्षिभिः ।
कथं न निःसरत्यङ्ग ? श्लोकः कण्ठात्तवादिमः ।।१६

दिनं कां शिवतां याति श्रुत्वा कर्म महात्मनाम् ।
गार्हपत्ये हविर्दत्वा नारीमेवं प्रकुर्वताम् ।।१७

चतुर्दशसु रत्नेषु गरीयो गरलं सखे ! ।
याचते यद्धि भर्तारं गृहणी मोक्षकांक्षिणी ।।१८

प्रविश प्रविशाग्निं त्वमित्यादिश्य रघूद्वहः ।
हविष्यमिव वैदेहीं दत्वा पुण्यमवाप्तवान् ।।१९

मधु तिष्ठति जिह्वाग्रे हालाहलं हि मानसे ।
इत्युक्त्वा कविना नार्यो दुर्जनप्रतिमाः स्मृताः ।।२०

भूषणप्रियनारीणां विधन्ति नासिकापुटम् ।
बलीवर्द-समा तासां रश्मिर्हस्तान्तरं गता ।।२१

संविधाने विधेर्भाव ! विभेदः परिलक्ष्यते ।
उर्जस्वलो नरो दृष्टो नारी च दुर्बलाङ्गिका ।।२२

विधातुं यन्नराः शक्तास्तत्कर्तुं न क्षमाः स्त्रियः ।
अस्ति स्त्रीणां गतिर्यत्र पौरुषं तत्र हीयते ।।२३

नराः पौरुषसम्पन्नाः शोभन्ते न गृहाङ्गणे ।
नापि सन्नाहसन्नद्धा नार्यः क्वापि रणाङ्गणे ।।२४

श्रमविभाग-निर्णेया कार्याकार्यव्यवस्थितिः ।
सूचीसाध्यं हि यत्कर्म खड्गस्तत्र न युज्यते ।।२५

स्वे स्वे कर्मणि संलग्नौ मोदमभाववाप्नुतः ।
विपर्यासे तु सर्वत्र जायते विग्रहस्थितिः ॥२६

उभयोरपि स्वातन्त्र्यं स्वे स्वे कर्मणि समीह्यते ।
यत्रास्ति विषयैकत्वं समत्वे तत्र गौरवम् ॥२७

युक्ताहार विहारौ च युक्ते कर्मविचेष्टिते ।
युक्तौ स्वप्नाववोधौ हि ददतः स्वर्ग्यमैश्वरम् ॥२८

भर्तुः शवेन या साकं चितामारोहति स्वयम् ।
आत्मघातं प्रकुर्वाणा क्लिश्नाति वै कुलद्वयम् ॥२९

जघन्या निर्घृणाश्चैव सन्ति ता ज्ञातयः सखे ! ।
विधवां रश्मिभिर्बध्वा पातयन्ति चितानले ॥३०

किंल्लोकाराधनावृत्तिर्नरव्यापारसीमिता ? ।
दृष्टा नार्योऽपि मुञ्चन्त्यः पतिमपि गतव्यथाः ॥३१

शश्वद्यौवनमिच्छन्ती माता जातं निजात्मजम् ।
न पाययति दुग्धं स्वं कीदृशीयं हि मातृता ! ॥३२

रिरंसू पितरौ कोणे प्रक्षिप्य निजात्मजम् ।
रोरुद्यमानमाकर्ण्य किमाप्नुतो मुदं रतौ ॥३३

न जाने कीदृशं सौख्यं लभेते दम्पती सखे ?
स्तनन्धयाँच्छिशूंस्त्यक्त्वा प्रयान्त्यौ द्रव्यलिप्सया ॥३४

उपेक्षया गतस्नेहैरात्मजैः पितरौ यदि ।
वार्धके नैव सेव्यन्ते कस्य दोषोऽत्र कल्प्यते ॥३५

गृहं मधुरमित्युक्तिर्जाता सम्प्रत्यसाम्प्रतम् ।
प्रशान्तमानसौ क्वापि न दृष्टौ पितरौ सखे ! ॥३६

जनता प्रतिमा भाव ! भागद्वये प्रतिष्ठिता ।
पुरुषो दक्षिणो भागो वामे वामा विराजते ॥३७

यथा जनेषु दाक्षिण्यं तथा वामत्वमीह्यते ।
अन्यतरस्य वैधुर्याज्जायते विषमा स्थितिः ॥३८

अतोऽनयोर्हि सम्बन्धः समवायसमो मतः ।
संयोगे युतसम्बन्धे वियोगो वै प्रसज्यते ॥३९

यदा वै दक्षिणो भागस्ताण्डवं कर्तुमीहते ।
वामभागो मृदुलास्याद् रौद्रं प्रकुरुते मृदु ॥४०

वामः पुनर्यदा भाव ! लास्यायैवास्ति साग्रहः ।
ओजसा दक्षिणस्तावत् तस्मै छन्दं प्रयच्छति ॥४१

वामदक्षिणयोर्भाव ! समत्वं योग उच्यते ।
इच्छाज्ञानकृतीनां हि सामञ्जस्यं प्रशस्यते ॥४२

भार्या दाराः कलत्रञ्चेति त्रिलिङ्गाभिधेयता ।
नारीणां प्रभुतां किन्न प्रदर्शयति प्रसृताम् ॥४३

०—०

# ४. दुष्पर्यावरणम्

गिरिमनोकहैः शून्यं छिन्नवीरुद्वनस्थलीम् ।
वीक्ष्यार्द्रलोचनौ जातावर्द्धनारीनटेश्वरौ ॥१

पूर्वमुन्माथतां दृष्ट्वा त्वचं पर्वतपुत्रिका ।
देवदारोर्गजस्कन्धान्ममज्ज शोकवारिधौ ॥२

सम्प्रत्युपत्यकां सर्वां स्थाणुशेषामिव स्थिताम् ।
निभाल्य याचते स्थाणुंप्रयोक्तुमुग्रताण्डवम् ॥३

निरस्ततिलका भाव ! परिधृतहिमाम्वरा ।
कुञ्जवलयविभ्रष्टा द्रोणीयं विधवायते ॥४

अन्नपूर्णेति विख्याता हिमाद्रेस्तनया गृहे ॥
अन्नरिक्तं स्वमृद्भाण्डं वारं वारं निरीक्षते ॥५

तपसि निरतस्स्थाणुर्भैक्षचर्यां समाचरन् ।
सम्प्रत्यलब्धभिक्षान्नः कुत्र गच्छेद्बुभुक्षितः ॥६

विषाक्तं पूतनास्तन्यं पीत्वापि नन्दनन्दनः ।
पञ्चत्वं न गतो भाव ! मोदयामास गोकुलम् ॥७

पूतानाम्न्या हि कालिन्द्याः साम्प्रतिकं पयः कथम् ।
पातुं नेच्छति गोपालो मन्ये कृतान्तभीतितः ॥८

पुरा यज्जाह्नवीतोयं पुनाति स्म वपुःस्पृशत् ।
तदेव पूतिगन्धाढयं याचते शुद्धिमन्यतः ॥९

गङ्गायमुनयोर्यत्र सरस्वत्या समागमः ।
तिस्रोऽपि मातरस्तत्र पयोदाने न सक्षमाः ॥१०

धिक्तांस्तुच्छमनोजाल्मान् संगतान् पापकर्मणि ।
यैः कलुषीकृतं भाव ? पीयूषप्रतिमं पयः ॥११

आपो हि ष्ठा मयो भुवस्तान ऊर्जे दधातन ।
इति श्रुतिर्गता मिथ्या समृद्धे यान्त्रिके युगे ॥१२

राजहंसाः कुतो याताः प्रियासन्देशहारिणः ।
दमयन्ती नभोदृष्टिर्जायते वाष्पलोचना ॥१३

क्रौञ्चयुग्मानि नो यान्ति साम्प्रतं दृग्पथं सखे; ।
सरांसि वारिशून्यानि स्थाणुशेषं वनं तथा ॥१४

क्रौञ्चवधे नन्वेकस्मिन् निषादः शापमाप्तवान् ।
क्रौञ्चशून्ये जगत्यद्य कैः कं शापेन दण्डयेत्! ॥१५

नभस्येऽपि न दृश्यन्ते मेघाः कज्जलासिताः ।
को नाम यक्षसन्देशं काले नेष्यति यक्षिणीम् ॥१६

ऊर्ध्वमूलमधश्शाखं चक्रेऽश्वत्थं पुरा हरिः ।
साम्प्रतं निकषा ग्रामं वनं जातमधश्शिखम् ॥१७

मातृभूमेः पयो जातं हालाहलविमिश्रितम् ।
नाथितुं यन्त्रकालीयं हरिर्नायाति गोचरम् ॥१८

भुवश्शाटीमरण्यानीं दुःशासनविकर्षिताम् ।
धृतराष्ट्रं विना सर्वे प्रपश्यन्ति ह्यधोदृशः ॥१९

भूमिर्वन्ध्या पयोऽपेयं पावको धूमकज्जलः ।
पूतिगन्धः सदागामी चित्रं ! प्राणिति मानवः ॥२०

नदीनाममृतं वारि यैरकारि विषोपमम् ।
साचिव्यं यमराजस्य तैर्जगति समीहितम् ॥२१

गाङ्गं पयो विषदिग्धं मरणासन्नत्वत्पितुः ।
वदने पातितं भाव ! किं प्रयतं करिष्यति ? ॥२२

द्यौष्पितुर्हृदये रन्ध्रं जातमिति निजात्मजैः ।
वार्ता श्रुत्वा मही माता बभूव भृशमर्दिता ॥२३

तस्या मनसि सन्तापो ज्वरेण सह ववृधे ।
भयातुरा विषण्णा सा वेपे सर्वाङ्गपीडिता ॥२४

विललाप दिवा रात्रौ सामर्षा तनयान् प्रति ।
दुष्कृतं कृतवन्तस्ते ममैव पुत्रका इमे ॥२५

हिमविन्ध्य – स्तनद्वयान्निःसृतममृतं पयः ।
कृतं हन्त ! विषैःपृक्तं तीव्रं हालाहलादपि ॥२६

कन्ये मे यमुनागङ्गे नान्यतः शुद्धिमर्हतः ।
प्रार्थयेते कमप्यद्य प्रयतार्थं महौषधम् ॥२७

अरण्यानी दुकूलं मे प्रसह्याकृष्य वक्षसः ।
विवस्त्रास्मि कृताक्षुद्रैः कृष्णेव बत संसदि ॥२८

ध्रुवयोर्मोहिमध्रौव्यं जायते यदि प्रश्लथम् ।
रक्षायै मे महामत्स्यः कः पुनरवतरिष्यति ॥२९

सम्पादयन्तु मे पुत्राःकामं सम्मेलनं मुहुः ।
सन्नद्धा मम रक्षायै तेषांपित्र्यै कुतोऽगदम् ॥३०

रन्ध्रेष्वनर्थबाहुल्यं भवतीत्यनुशुश्रुमः ।
तेषां विरोपणाभावे क्व वयं क्व च पुत्रकाः ॥३१

०—०

# ५. अश्वत्थनिर्वेदः

ऊर्ध्वशाखमधोमूलं रोदसी व्याप्य सुस्थितम् ।
मामश्वत्थं हरिः कस्माद् विपर्यस्तकुरूरुपत् ? ॥१

विद्यन्ते पारिजाताद्या देवद्रुमास्त्रिविष्टपे ।
नासीत् किं पात्रता तेषु येन मामचिनोत् प्रभुः ॥२

वीक्ष्यन्ते पादपा भूम्यां आम्रन्यग्रोधचन्दनाः ।
अश्वत्थे मयि किं दृष्टं हरिणा गुणगौरवम् ? ॥३

यमेष वृणुते तेन लभ्य इति वचःश्रुतेः ।
मामेव चिन्वता हन्त ! किं विहितं निदर्शनम् ? ॥४

भूजनन्याः पयःपानाद् वियुक्तोऽस्मि कथं सखे ।
प्राणानिह हि धास्यामि मीन इव मरुस्थले ? ॥५

तिष्ठतीह चिरं नो श्वः शाल्मलियादपादिवत् ।
व्युत्पत्तिरिति मे नाम्नः शंसति गुणशून्यताम् ॥६

मह्यं न रुरुचे भाव ! वेद-विद्भिः प्रशंसिता ।
शीर्षासनसमाह्येषा स्थितिर्वै हठयोगिनाम् ॥७

अपाकृत्य व्ययीभावं प्रदत्तो योऽव्ययीभावः ।
नाहं जानामि किन्तेन श्रेयोवृद्धिर्भविष्यति ? ॥८

अव्ययव्यययोर्मध्ये व्ययत्वं वेद्मि सौभागम् ।
निष्क्रियः किञ्च कूटस्थः कस्मै क्षेमं प्रयच्छति ? ॥९

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
यस्य वचनमेकं तत् कस्मै भवेत् सुखावहम् ॥१०

कोऽर्थः कूटस्थभावेन निष्क्रूपेण निरीहसा ।
कूटस्थं कः स्मरेद् भाव ! भूगर्ते पतितो जनः ॥११

क्षणे क्षणे हि यद्रूपं नव्यत्वमधिगच्छति ।
सौन्दर्यस्य परां कोटिं तदेव स्पृशति स्वकाम् ॥१२

व्ययत्वाद् वारिदा वन्द्या व्ययत्वाद्धि हुताशनाः ।
सरितो मातरः पूज्या व्ययत्वं मूर्ध्नि वर्तते ॥१३

उत्खातो मातृभूक्रोडात् कष्टं प्राणान् दधाम्यहम् ।
इति नैव विजानाति मयि निष्करुणो हरिः ॥१४

प्रत्यूषे सर्वतो भाव ! सूर्यस्य जगदात्मनः ।
प्रकाशे प्रसूते वध्वः पूजापात्र सुशोभनाः ॥१५

हन्त ! वीक्ष्य समुत्खातमूर्ध्वमूलमधश्शिखम् ।
विच्छायवदना भाव ! मन्दं मन्दं परावृताः ॥१६

हेलासु चतुराः सख्यो भावालिङ्गनपूर्वकम् ।
रहस्यं ख्यापयन्त्योऽद्य नायान्ति सविधे मम ॥१७ प

वारिपूर्णघटा नार्यः स्वेदार्द्रवदनाः क्षणम् ।
निरूप्योत्खातमूलं मां धिक्कुर्वन्ति जडं विधिम् ॥१८

तरुणस्तरुणीसक्तो गोधूलिधूसराननः ।
परिभ्रमन् समुत्कण्ठो नात्र भाव ! विलम्बते ॥१९

विहगा वीक्ष्य निष्प्राणं खिन्नाः सायन्तनेऽपि माम् ।
निकषा न समायान्ति विनोदाय मृदुस्वनाः ॥२०

किमर्थं हन्त ! नो जाने छिन्नमूलं विधाय माम् ।
हरिणापहृतं भाव ! परार्थ-जीवने सुखम् ॥२१

०-०

# ६. सुहृत्पत्रकम्

स्वस्तिपूर्वकमिदं तुभ्यं प्रेष्यते पत्रकं सुहृत् ।
कल्याणं कुरुतामीशस्तवैश्वर्याभिलाषिणः ॥१

व्याधिना दुर्बलस्वास्थ्यः श्लथः पत्रकप्रेषणे ।
क्षन्तव्योऽयं जनो मित्र ! द्वितीयं हृदयं तव ॥२

आ प्रवासावधेर्वक्ष्ये योगक्षेममहं तव ।
जनन्या इति प्रज्ञापि नो सम्यक् पूरिता मया ॥३

साम्प्रतं हि गतव्याधिरभीप्सुर्मातुराशिषः ।
तव गेहं गतो मित्र ! किञ्चिद्गदितुमुत्सहे ॥४

प्राप्तो दीपोत्सवो भूयः खेदहर्षसमन्वितः ।
वर्षद्वयं व्यरंसीच्च विदेशगमनात्तव ॥५

गृहाः प्रज्ज्वालितैर्दीपै राजन्ते सर्वतः सखे ? ।
अल्पनाभिश्च शोभन्ते प्राङ्गणानि प्रतिगृहम् ॥६

अविद्यमानपुत्राया गृहं शून्यमिवाभवत् ।
दारिद्र्याचादधुना भूयः सर्वं शून्यं प्रतीयते ॥७

बालतरुणवृद्धाश्च कमलागमकांक्षिणः ।
तमसो निर्गमान्मित्र ! नृत्यन्त्यानन्दनिर्भराः ॥८

शिरोपातंसमभ्यर्च्यं पूर्वं तुलसिपादपम् ।
उटजद्वासि ते मात्रा सास्रया जीर्णगात्रया ॥९

ध्यायं ध्यायं तव क्षेमं प्रदीपः स्नेहपूरितः ।
वेपमानेन हस्तेन प्रज्ज्वाल्य स्थापितः सखे ॥१०

चित्तमासीद् द्विधाभूतं प्रवासं प्रस्थिते त्वयि ।
व्यसनोदयवद्धन्त ! प्रभाते शशिसूर्ययोः ॥११

रुदतीं मातरं वीक्ष्य चिन्ताव्याकुलमानसाम् ।
सान्त्वयितुं मनस्तस्यास्त्वया सास्रमुदीरितम् ॥१२

खेदं मा गाः परावृत्य द्रागेव निजमस्तकम् ।
पांसुना मातृभूमेस्ते पावयिष्ये हि पादयोः ॥१३

अङ्के त्वां धार्यमाणायानिपेतुर्येऽश्रुबिन्दवः ।
मातुर्मौलौ न ते याता सुहृन्मे पूर्णशुष्कताम् ॥१४

पूर्वं पत्राणि तावन्ते लभामहे निरन्तरम् ।
क्रमशस्तानि जातानि दीर्घकालानि भूयसा ॥१५

साम्प्रतं पत्रदूतास्ते सम्प्राप्ताः शशशृङ्गताम् ।
प्राणालम्बनमासीद्यत् तदप्येकं गतोऽस्तताम् ॥१६

जाठराग्नेः समापूर्त्यै पोषणाय च ते वपुः ।
अध्ययनाय सर्वस्वं ययार्पितं निरीहया ॥१७

सा किमप्यधुना तात ! स्मर्यते दूरतो गते ।
देशकालावधिं स्नेहो न गणयति वै सखे ॥१८

अहं मन्ये विदेशेषु कामिन्यः किञ्च सम्पदः ।
सुलभाः सन्ति भोगाय जनन्येतादृशी कुतः ॥१९

वाणी या हि मुखात्तस्या निःसृतामृतसन्निभा ।
श्रुत्योः कदापि किं सा ते माधुर्येण निषिञ्चति ? ॥२०

स्मरन्त्यामधुनापि त्वां स्तनाभ्यां स्रवते पयः ।
किं त्वं स्मरसि मे मित्र ! तस्याः पाणिं शिरोधृतम् ॥२१

सा प्रतिवेशिनी सीता शैशवं वाहितं सुखम् ।
यया सार्धं सखित्वेन किं जाता स्मृत्यगोचरा ? ॥२२

पठन्ती रामवृत्तं सा साम्प्रतमपि चेतसि ।
नाम्नस्ते समरूपत्वदास्ते त्वद्भावभाविता ॥२३

प्रत्यहं हि तव क्षेमं मातरं पृच्छति स्वयम् ।
पत्र - प्राप्तेरभावत्वाज्जायते खिन्नमानसा ॥२४

स्मरसि प्रबलं हर्षं सुधापानविडम्बिनम् ।
तिथौ भ्रातृद्वितीयायां लेभे शान्ता तवानुजा ॥२५

गोरोचनाक्षताश्चाङ्ग ! तयाप्रेषि तवान्तिके ।
तैर्नूनं मस्तकं मित्र ! तव जातं सुरोचनम् ॥२६

क्षिप्यसि तान्न सत्यं त्वं गृहधूलिचये प्रिय ! ।
अक्षय्यो युवयोःस्नेहो न निकारमपेक्षते ॥२७

नवनीतसमं स्निग्धं कोमलञ्च समुज्ज्वलम् ।
हृदयं हि भगिन्यास्ते नास्ते तापसहं सखे ! ॥२८

स्नेहो भ्रातृभगिन्योर्हि वरोऽस्ति दुर्लभो विधेः ।
नूनं स नावमन्तव्यः स्वप्ने च व्यसने सखे ! ॥२९

श्रूयते यत्त्वया बाला काचिद् वैदेशिकी वृता ।
विवाहाय स्वयं भद्र ! नात्र दोषः प्रकल्प्यते ॥३०

परं वयस्य ! तत्प्राप्त्यै धर्मान्तरस्य का कथा ! ।
अपि त्वं नैव जानीषे स्वभावो दुरतिक्रमः ॥३१

धर्मान्तरो न दोषाय क्रियते चेन्निसर्गतः ।
अलभ्यवस्तुलाभाय विहितो जायते मृषा ॥३२

संस्काराणां विभेदत्वाच्छनैः कालविपर्यये ।
मिथःसञ्जायते कापि स्वाभीष्टेषु विरोधता ॥३३

अहमहमिकयाङ्ग सख्यं सौख्यं व्यपोह्यते ।
स्नेहाभावादपत्यानां माङ्गल्यं परिहीयते ॥३४

स्नेहो दया च सौख्यञ्च मुञ्चन्त्येकपदे तदा ।
स्वर्गोपमं गृहं हन्त ! प्रज्वलद्रौरनायते ॥३५

कष्टान्निजाननादृत्य माता तुभ्यं ददौ धनम् ।
अकुण्ठितं यतः प्रज्ञा विकसेद्भूरिशस्तव ॥३६

शासनेनापि त्वत्प्रज्ञां मत्वा राष्ट्रशुभावहाम् ।
प्रदायि प्रचुरं द्रव्यं येनाधीती भवेद् भवान् ॥३७

स्वमात्रे मातृभूम्यै च धारयसे बृहदृणम् ।
ऋणे द्वे किं न बाधेते तव शान्तां मनस्स्थितिम् ॥३८

ऋणाद्यो वै जनोबद्धः स प्राप्नोत्यधमां गतिम् ।
अधोगतस्य जीवस्य जीवनं मृतसन्निभम् ॥३९

विदितवेदित व्याय तुभ्यं यद् विनिवेदितम् ।
हितायैव न दोषाय विदुषे पुनरुक्तवत् ॥४०

जाताष्टादशवर्षीया शान्ता तावत्तवानुजा ।
तस्या वैवाहिकी चिन्ता क्लिश्नाति मातरंभृशम् ॥४१

जननीभगनीसीतास्त्वत्कृते सन्ति चिन्तिताः ।
प्रवृत्तिदर्शनाभावस्तनोति चित्तखिन्नताम् ॥४२

तासामार्द्राणि नेत्राणि वीक्षितुमस्मि न क्षमः ।
मन्दं मन्दं हि गच्छामि त्वग्देह प्रति विक्लवः ॥४३

आधिग्रस्ताः पुनः सर्वाः संजाता व्याधिपीड़िताः ।
दुःखार्णवे निमग्नानां किं नौरेको महेश्वरः ॥४४

प्रच्छन्नीकृत्य ताभ्यो ह्यलेखि पत्रमिदं मया ।
कुतस्ता मित्र ! वाञ्छन्ति मनस्ते यातु खिन्नताम् ।४५

पत्रे यल्लिखितं भद्र ! मान्यथा तत् प्रकल्पथाः ।
पूरोत्पीडे तडागस्य परीवाहो हि सत्क्रिया ॥४६

मातृभूजननीप्रीत्या समुद्वेलितमानसः ।
प्रत्यागमिष्यसि त्वं चेन्माङ्गल्यं वितरिष्यसि ॥४७

न हि कल्याणकृत्कश्चिद् दुर्गतिं तात ! गच्छति ।
इति भगवतो वाक्यं सचिन्त्य मा कृथा व्यथाम् ॥४८

दीपका आनिशं मित्र ! तमिस्राध्वंसकारिणः ।
प्रज्वलिताः स्युरापर्वण इत्याशा समन्विताः ॥४९

जननीभगिनीसीताः स्नेहेन दीपसन्ततिम् ।
जागरिताः वैसिञ्चन्त्यो यापयन्ति निशामिमाम् ॥५०

सर्वे वयं तवारोग्यमङ्गलानां च कांक्षिणः ।
प्रणम्य परमात्मान याचामहे शमव्ययम् ॥५१

०—०

# ७. पार्थनिर्वेदः

निशम्य वज्रसम्पातं निर्वाणं भगवतोऽर्जुनः ।
स्मारं स्मारं हरेः सख्यं विललाप सगद्गदम् ॥ १

आत्मनश्चिरनित्यत्वं विस्मार्य स विमूढवत् ।
प्राकृतजनवद्भूयो रुरुदे शोकविह्वलः ॥ २

चलालेख्यसमं सर्वं वृत्तमक्ष्णोः पुरो हठात् ।
आविर्भूय मनस्तस्य चक्रे विभ्रमवेष्टितम् ॥ ३

न योत्स्य इति संश्रुत्य वचो मे रुद्धकण्ठकम् ।
श्रीहरिर्गणयामास क्लैब्यं तन्निर्णयं मम ॥ ४

सर्वं मे वचनं तेन प्रज्ञावादसमं स्मृतम् ।
अयशस्यमधर्म्यञ्च मे तत्कर्म संज्ञितम् ॥ ५

क्लैब्यं मा स्म गमः पार्थ! युद्ध्यस्व विगतज्वरः ।
इति वाक्येऽसकृच्छ्रुत्वा मतिर्मे रिक्ततां गता ॥ ६

तत्वबोधाय प्रारब्धा दुर्बोध्या तर्कप्रक्रिया ।
यस्यां विभिन्नयोगानां आसीत् किमपि दर्शनम् ॥ ७

कर्मासक्तिविहीनो ना नैव भवति किल्विषी ।
निष्कर्षः सर्वयोगानामित्येवासीत् समन्वितः ॥ ८

मां पुनः प्राप्तनिर्वेदं संगराद्विरतं हरिः ।
दर्शयित्वाद्भुतं रूपं प्रेरयामास योधने ॥ ९

क्षात्रधर्मस्मृतिं लब्ध्वा सहजे कर्मणि श्रितः ।
कुर्वाणो हरिसन्दिष्टं निरासक्तः फलं प्रति ॥१०

पितामहान् गुरून्भ्रातॄनखिलान्बन्धुबान्धवान् ।
निशितैश्शरसम्पातैश्चक्रे यमालयातिथीन् ॥११

सँल्लक्ष्य तत्कुरुक्षेत्रं धर्मक्षेत्रमिवापरम् ।
अयुतशवसङ्कीर्णं शोणशोणितपङ्किलम् ॥१२

भूयोऽपि निर्विण्णमना विषण्णवदनोऽस्थिरः ।
जिह्मगतिर्नतग्रीवो जगाम भवनं प्रति ॥१३

तल्पस्थस्तत्र चैकान्ते वामहस्तधृताननः ।
निर्निमेषो जडदृष्टिस्तस्थौ मनसि चिन्तयन् ॥१४

महाहवान्ननु किं लब्धमस्माभिः स्वल्पजीवितैः ।
विनाशानन्तर क्वास्ते सम्भूतिश्श्रुतिदर्शिता ॥१५

मृत्युसन्तरणं पूर्णं नाप्तममृतमीहितम् ।
दुष्कृतो विलयं याता दुष्टैस्ते साधवो हताः ॥१६

शून्यं हि सर्वतो शून्यं जगति परिलक्ष्यते ।
को नाम साम्प्रतं मार्गं पूर्ववद् दर्शयिष्यति ॥१७

भारतीयं महायुद्धमष्टादशदिनात्मकम् ।
दीर्घं दुःस्वप्नवद्धन्त! रात्रिन्दिवं स्मराम्यहम् ॥१८

समाप्ते संगरे नूनं क्षत्रियाणां महाक्षये ।
स्त्रीषु दुष्टासु शेषासु सञ्जाता धर्मविक्रिया ॥१९

वृत्तिहीनाः क्षुधार्ताश्च वस्त्रेणैकेन वेष्टिताः ।
दुश्शीलैः प्रतिवेश्यैस्ता भ्रष्टा जीवन्ति दुर्भगम् ॥२०

नारीणां वहुसंख्यात्वाद् विवाहैः प्रतिलोमकैः ।
वर्णधर्माः कुलाचारा विनष्टा मूलतो भृशम् ॥२१

वलिनः क्षत्रियाः सर्वे सङ्गरे शून्यतां गताः ।
व्राह्मणा वणिजश्शूद्रा हीनसत्वा नराः स्थिताः ॥२२

यवनाभीरभिल्लाश्च दृष्ट्वा राष्ट्रं सुनिर्वलम् ।
सम्पन्नं भारतं राष्ट्रं समन्तादभिदुद्रुवुः ॥२३

गोपीनां च गणं हन्त! गाण्डीव्यप्येष पाण्डवः ।
भिल्लैरपहृतं त्रातुं न शशाक विलज्जितः ॥२४

कुरूक्षेत्रमहं मन्येऽधर्मक्षेत्रमिवापरम् ।
प्रत्यहं शोणितस्नानं यत्राकारि मयाशुचि ॥२५

कुरूणाञ्च मही श्रेष्ठा जातामेध्यं पितृस्थलम् ।
प्रत्यूषे पवनो यत्र वाति पूतिपरायणः ॥२६

सरस्वत्या जलं जातं रक्तमेदो विमिश्रितम् ।
कर्तुं निर्वापणं तत्र को नाम समुपागमेत् ॥२७

यज्ञैर्मेध्यमिदं क्षेत्रं हविर्गन्धैश्च सम्भृतम् ।
अस्माभिर्विहितं हन्त ! रक्षोवसति सन्निभम् ॥२८

क्षेत्रमयुतसंख्याकै रक्ताप्लुतशवैर्वृतम् ।
जात गृध्रशुनाञ्चैव महाभोजवृहत्स्थलम् ॥२९

सर्पिसास्वादसन्तृप्तो हव्यवाहोऽधुना बत ! ।
हस्तिहयनराणाञ्च मेदसां भक्षणे श्लथः ॥३०

सायञ्च सवने प्रातः सामभिः पूरितं नभः ।
विधवाबालवृद्धानां पूर्णं विरहरोदनैः ॥३१

यदुक्तं हरिणा नास्ति क्वापि निष्फलता रणे ।
तदसत्यमहं मन्ये जित्वापि क्वास्ति भोज्यता? ॥३२

भोजनग्रहणात्पूर्वं कथं क्षाक्षल्यसे करौ ? ।
इति पापृच्छयतेऽहं वै सुभद्रयार्द्रनेत्रया ॥३३

यतो वै सन्ति भोज्यानि प्रदिग्धानि नरासृजा ।
को नाम भुञ्जते स्वादु स्थितप्रज्ञोऽपि पायसम् ॥३४

अष्टादशदिनं यावत् सारवन्तौ भुजौ मम ।
निर्वीर्याविव सञ्जातौ गाण्डीवधारणेऽक्षमौ ॥३५

त्रसनशीलमासीद्यद् युद्धारम्भे धनुर्मम ।
साम्प्रतं बत संजातं पिनाकप्रतिमं गुरू ॥३६

काष्टपुत्तलिकेवाहं आप्रघनाद् वृहन्नला ।
अनाटि विवशं हन्त ! हरिणा सूत्रधारिणा ॥३७

अन्तरेणास्त्रसंग्रामं सन्त्यन्येऽपि रणा भुवि ।
ये विना रक्तपातेन युध्यन्ते जीवितावधि ॥३८

भारतीयरणो जातो ह्यष्टादश-दिनात्मकः । ३८
प्रवर्तपेऽभ संग्रामः कोऽपि बहुशताब्दकः ॥३९

श्रीकृष्णोऽप्यार्द्रनेत्राभ्यां यादवानामधीश्वरः ।
प्रत्यक्षं ददृशे नश्यत् स्वज्ञातीनां बृहत्कुलम् ॥४०

यद्यन्मया हि युद्धस्य प्रत्यपाद्यफलं महत् ।
तत्तद् भगवता दृष्टं स्वयं यदुकुलक्षये ॥४१

सौराष्ट्रं राजति स्वैरं योगेश्वरे हरेरपि ।
कथन्न श्रीर्जयो भूतिरभूवन् दृष्टिगोचराः ॥४२

नाशिताः साधवो दुष्टैः स्वयं नष्टाश्च ते मिथः ।
केषां त्राणाय नाशाय सम्बभूव हरिर्विभुः ॥४३

हरेर्योगेश्वरे हन्त ! मयि चास्ते धनुर्धरे ।
केनादर्शि जयः श्रीर्वा विभूतिर्वानुयोधनम् ॥४४

गाण्डीवोऽप्यग्निना दत्तो जातो नष्टपराक्रमः ।
गोपीनां रक्षणे दृष्टा भिल्लेभ्यस्तस्य क्लीबता ॥४५

युद्धधर्ममपित्यक्त्वा गुरवः सम्बन्धिनस्तथा ।
हरेर्निदेशमालम्ब्य मयाहिंसि किलाहवे ॥४६

प्रद्युम्नानन्तरं दृष्टा न कापि परिवृत्तिता ।
प्रजासमधिकं मग्ना पङ्के गौरिव सीदति ॥४७

नारीणां हरणं द्यूतं गेहदाहोऽथ गोग्रहः ।
कृतं श्रेष्ठैर्यदस्माभिर्लोकस्तदनु वर्तते ॥४८

हरिणा यदुपादिष्टं लोकसंग्रहसिद्धये ।
नैव जाने कदा कुत्र तज्जनेषु प्रसिद्ध्यति ॥४९

धर्मं जानन्नपि प्राज्ञस्तं प्रति न प्रवर्तते ।
विज्ञाय वै कुधर्मञ्च निवृत्तिर्नास्ति गोचरा ॥५०

भीष्म द्रोणावुभौ दृष्टौ दासावर्थस्य भारते ।
धर्मनीतिमपाकृत्य जातावनयपोषकौ ॥५१

परिव्याप्ते तमस्यन्धे श्रुत्वा पदध्वनिं कलेः ।
वेदव्यासोऽब्रवीद् राजन् विद्धि प्राप्तं कलेर्युगम् ॥५२

तत एव कलिः क्षिप्रं दृढं स्वं निदधे पदम् ।
साम्प्रतं तस्य साम्राज्यं दृश्यते प्रथितं भुवि ॥५३

गीताशास्त्रं कलेर्हन्त! समक्षं कुण्ठतामगात् ।
यद्युषु हरिणा दृष्टा स्वतस्तस्य दृढा स्थितिः ॥५४

वैधव्यार्दित नारीणामनाथानाञ्च क्रन्दनैः ।
आपूर्णमखिलं व्योम क्लिश्नातीव दिवानिशम् ॥५५

सूच्याग्रां वसुधां न्याय्यां लब्धुमत्र धृतायुधैः ।
अस्माभिःश्यामला भूमिः कृता शोणितरञ्जिता ॥५६

कर्णौ मे बधिरौ जातौ शृण्वतः क्रन्दनं कटु ।
उपदिष्टं हरेर्वाक्यं नोक्तमपि स्मराम्यहम् ॥५७

पौरजानपदीयासीत् संस्कृतिर्भोगसंकुला ।
तस्याः परिणतिर्दृष्टा भारतीयेऽत्र संयुगे ॥५८

अरण्यवासिभिर्या हि शस्ता जीवनपद्धतिः ।
सैवेह स्पृहणीयास्त्यलं कामात्मताधुना ॥५९

व्याप्तानि रजसा सान्द्रं नभोनेत्रमनांसि च ।
हरेरद्य दिवं याते को तदपाकरिष्यति ? ॥६०

०—०

# ८. तमःस्तवनम्

गूढन्तमोऽप्रकेतञ्च सृष्टेः पूर्वं प्रतिष्ठितम् ।
तद्वीक्ष्य स्वप्रकाशोऽपि विव्यथे हृदये विधिः ॥ १

प्रदीपः स्वप्रकाशाय नार्हति ज्योतिरन्यतः ।
स्वप्रकाशेन वै धात्रा कुतः सृष्टास्तमोनुदः ॥ २

अरममाण एकाकी ततोऽपि तमसावृतः ।
बाह्याभ्यन्तरसंत्रस्तो द्विधाभूतः प्रजापतिः ॥ ३

प्रकाशो भाव ! कार्यत्वाज्जायते म्रियते पुनः ।
अजत्वादात्मवन्नाशस्तमसो नैव पद्यते ॥ ४

स्वतः प्रकाशकं वस्तु किमपि यत् प्रकल्प्यते ।
साध्याभावादसिद्धं तद् वन्ध्यापुत्रायते किल ॥ ५

पूर्वमादौ ततश्चान्ते तमसो विद्यमानता ।
अव्यक्तमिति शब्देन गीतासु हरिणा स्मृता ॥ ६

जगति वर्णभेदो यो मिथं कलहहेतुकः ।
प्रकाशः कारणं तस्य तमसि स प्रलीयते ॥ ७

भास्करस्योदये भाव! जना धावन्ति विक्लवाः ।
तमसि प्रसृते रात्रौ व्याप्नोति सर्वतः शमः ॥ ८

तमस्यङ्ग ! परिव्याप्ते किमप्यन्यन्न लक्ष्यते ।
ज्ञेयज्ञज्ञान लोपेन महदद्वैतमेधते ॥ ९

अस्ताचलं गते सूर्ये विहगोऽपि निलीयते ।
विश्राम्यति च निस्त्रस्तं तमस्सद्मनि रक्षितः ॥१०

तमोलीना यदा रात्रिर्व्याप्नोति सकला दिशः ।
प्रभोज्ज्वलं दिनं व्यक्त्वा जागर्ति मुनिरात्मवान् ॥११

तमोलीनां निशां भाव! कांक्षन्ति योगिनो यथा ।
तथैव भोगिनः किन्न प्रभुत्वं तमसां ध्रुवम् ॥१२

आदौ तमस्तथा चान्ते मध्ये ज्योतिर्विराजते ।
कित्तेन ज्योतिषा भाव! नास्ति यस्य त्रिकालता ॥१३

तमोभीता ध्रुवं भाव ! विद्युन्मेघे प्रकाशते ।
क्षणं दर्शयते स्वास्यं क्षणे चैव निलीयते ॥१४

नैरन्तर्येण यज्ञाग्निराज्याहुतिप्रदीपितः ।
वेपमानशिखो भाव ! तमोभीत इव स्थितः ॥१५

सूर्याचन्द्रमसौ भाव ! पुरुषस्येक्षणे खलु ।
त्रस्यमानाविव व्योम्नि तामसाद् दिविसंस्थितौ ॥१६

ज्योतिषा भाव! सम्भेदो विश्वेऽस्मिन्नुपजायते ।
ततः सम्पद्यते हन्त! कलहोऽशान्तिदायकः ॥१७

तमः प्रयोगविज्ञाने भवेच्चेद् विदुषां रतिः ।
प्रसरेत् सर्वतो विश्वे शान्तिरभेदसंभवा ॥१८

सूर्याचन्द्रमसौ दीप्तौ नक्षत्राणि ग्रहा इमे ।
कार्यत्वान्नाशमायान्ति तमोऽजत्वात् प्रतिष्ठते ॥१९

अन्तरिक्षं घनैः कृष्णं द्यौर्नीलाम्वरसंवृता ।
मेदिनी श्यामला शस्यैस्त्रैलोक्यां राजते तमः ॥२०

ज्योतिषां रमणीयत्वे तमः करणता मता ।
नक्षत्राणि प्रकाशन्ते नभसि तमसावृते ॥२१

जागरिताच्छयानो वै श्रेयान् सुप्तात् सुषुप्तिमान् ।
तुरीयश्च ततः श्रेयान् तमोजाडयसमाश्रयात् ॥२२

सप्तवर्णसमायोगे श्वेतवर्णः प्रजायते ।
लघु प्रकाशकं सत्वं निरपेक्षि कथं स्मृतम् ॥२३

क्लेषाणां क्षपणाद् भाव! रात्रिस्तमसवेष्टिता ।
क्षपेत्यभिख्या लोके प्राधान्याद् व्यपदिश्यते ॥२४

तमसो रक्षणे रेणुः सर्वत आवृणोति खम् ।
ततो हि तिमिराच्छन्ने जायेते नेत्रवर्त्मनी ॥२५

सप्तमे सत्यलोकेऽपि तमसा पीड़ितः प्रभुः ।
इयेष मर्त्यवद् भाव ! जगद् भवतु दीप्तिमत् ॥२६

हन्तुं समूलघातं वै सूर्यनक्षत्रराशिभिः ।
नभोमन्दाकिनीभिश्च ज्वलन्तीभिः समन्ततः ॥२७

येनाकारि महोद्योगस्तेन ज्ञातं सुनिश्चितम् ।
अव्ययत्वेन सर्वत्र तमोऽस्ति सुप्रतिष्ठितम् ॥२८

पूर्वभावस्य सिद्धत्वात् निमित्तत्वं क्व वार्यते ? ।
प्रकाशस्तमसः कार्यं भावो भावाद्धि जायते ॥२९

गुणेषु त्रिष्वपि न्याय्यं गुरुत्वाद् गौरवास्पदम् ।
तमसे मुनिनादायि सत्वाय ननु लाघवम् ॥३०

वस्त्वेकमद्वितीयञ्च यदि किमपि वर्तते ।
अव्ययं सदसद्रूपं तमसो नापरं भुवि ॥३१

माया ज्ञानमविद्या वा शून्यमव्यक्तमेव च ।
नामान्तराणि गण्यन्ते तमोदर्शकांक्षिभिः ॥३२

प्रमेयत्वमतस्तस्य सर्वकोविदसम्मतम् ।
तदन्तरेण नो पूर्णा कापि दर्शनपद्धतिः ॥३३

घटं वै तमसाच्छन्नं द्रष्टुं दृष्टिरपेक्ष्यते ।
तमसामनुभूत्यै क्व दृष्टिदीपकयोः स्थितिः ॥३४

भास्करः कुरुते मन्दं तेजो दीपस्य तेजसा ।
एतादृशं कुतो वैरं दृष्टं तमसि शासति ॥३५

विद्यस्यादथवाविद्या द्वेऽपि स्वीयमुपासकम् ।
गमयतस्तमस्यन्धे प्रमाणयति वै श्रुतिः ॥३६

अतोऽपि तमसो भाव! सर्वप्रमेयजातेभ्यः ।
गरीयस्त्वं जगत्यस्मिन् मूर्धन्यधितिष्ठति ॥३७

असाम्प्रतं वचो नेदं गमय ज्योतिषस्तमः ।
भेदं व्यनक्ति वै ज्योतिस्तमसाद्वैतमीहते ॥३८

०—०

# ९. गुरुलाघवम्

अज्ञानाञ्जन-लेपेन नेत्र शोभा विधायिना ।
दृष्टिर्मे साधिता येन तस्मै श्री गुरवे नमः ॥ १

पल्लवग्राहि-पाण्डित्यं गुरूणां वै यशस्करम् ।
मूर्खोऽपि समतामेत्य यैः सहालपतेऽञ्जसा ॥ २

विरमाध्ययनादङ्ग ! भ्रमेत्वरसमो भुवि ।
अज्ञोऽप्युत्तीर्णतामेति यतो गुरूप्रसादतः ॥ ३

गुरवः प्रायशः सर्वे संजाता अर्थदृष्टयः ।
ये श्रुत्वाऽप्यपशब्दान् वै तिष्ठन्ति मुद्रिताननाः ॥ ४

कृच्छ्रादपि समागत्य कक्षायां यो न वाञ्छति ।
शिष्यान् पाठयितुं भाव ! स वै श्रेष्ठो गुरुर्मतः ॥ ५

श्रार्ययैश्चलचित्राणां कथा रम्या असौ गुरुः ।
अध्यापयति किंनात्र भाविनेतृन् हि संस्कृतिम् ॥ ६

एकलव्योपमाः सर्वे शिष्या जाता विचक्षणाः ।
ऋतेऽप्याचार्यसान्निध्याज्जायन्ते वै धनुर्विदः ॥ ७

तं गुरुं प्रथमं वन्दे यस्य पूर्णप्रसादतः ।
अनुकृतिं प्रकुर्वाणः परीक्षायां न वारितः ॥ ८

लब्धवा ह्यभीप्सितं द्रव्यं येन शोधप्रबन्धकम् ।
अलेखि मत्कृते भात्र ! तस्मै श्री गुरवे नमः ॥ ९

परीक्षासागराद् भाव ! दुस्तरादूर्मिसंकुलात् ।
को व्रजति परं पारं विना गुरुप्रसादतः ॥१०

बुद्धेः प्रकर्षता भाव ! यादृश्यस्ति धनार्जने ।
ज्ञानार्जने गुरुणां क्व तादृशी सम्प्रतीयते ॥११

विद्या विप्रं पुरागत्य ब्रूते संरक्ष शेवधिम् ।
साधुना विपणौ प्राह मां क्रीणीहि वराङ्गनाम् ॥१२

होरात्रयं विपत्कालं परीक्षाभवने गुरुः ।
सुषुप्त्यां गणयञ्छेते सुलभं द्रव्यसंचयम् ॥१३

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
तच्छ्रुत्वा कुत्र गन्तव्यं सर्वत्रैव समा स्थितिः कथा ॥१४

अध्ययनं विना भाव स्नातकोपाधिः सम्भवः ।
इति मत्वा सुखं शेते कक्षायां छात्रसंहतिः ॥१५

सुखार्थी चेदवाप्नोति श्रमादृते महार्हताम् ।
किं कलागुरुणा तेन सतताभ्यासकांक्षिणा ॥१६

पादौ निपीड्य गुरोःप्राक् शिष्योवर्धिष्णुतां गतः ।
उत्पीड्य साम्प्रतं पादौ कक्षोत्तितीर्षुरल्पधीः ॥१७

अज्ञानतमसा पूर्वं पश्चादपि तदावृता ।
स्नानका दृष्टिमायान्ति भारतेऽयुतसंख्यकाः ॥१८

गुरवो द्रोणवज्जाता एकाक्षगोलका इव ।
एकतोऽक्षिनिपातोऽस्ति शिरः कम्पनमन्यतः ॥१९

विद्यागुरोर्हि माहात्म्यं साम्प्रतमस्ततां गतम् ।
सरस्वती निलिल्येऽद्य हंसः क्वास्ते विवेचकः ॥२०

नायमाभाणको मिथ्या संघे शक्तिः कलाविति ।
प्राचार्यो भाव ! संजातः छात्रसंघ वशंवदः ॥२१

अवाच्यवाक्यमाकर्ण्य छात्राणां जनसंकुले ।
यस्य नो व्यथते चित्तं सवै प्राचार्य उच्यते ॥२२

ग्राहयति पुराशीलं प्राचार्यो यत्नतः कुले ।
साम्प्रतं छात्रसंघस्य नायकश्शील शिक्षकः ॥२३

छात्राणामेकतःसैन्यमेकतो गुरुवाहिनी ।
मध्ये संघर्षशीलोऽसौ राजते संघनायकः ॥२४

पुरा संन्यस्त - संघर्षमर्जुनं भगवान् हरिः ।
अनय — प्रतिषेधाय प्रेरयामास संगरे ॥२५

साम्प्रतं तु कृतव्यूहं छात्रसंघस्य नायकम् ।
अनयस्थापन — संलग्नं संघर्षात्को निवारयेत् ॥२६

क्रीडाक्षेत्रेऽथ कक्षायां परीक्षाभवनेऽपि च ।
समारोहे समायाञ्च द्वन्द्वो हि परिलक्ष्यते ॥२७

आचार्याणाञ्च छात्राणां प्रघनेऽस्मिन् सरस्वती ।
व्यथित-हृदया सास्रा पङ्के गौरिव सीदति ॥२८

प्रागन्तस्सलिला जाता पश्चाद्विज्ञमनस्स्थिता ।
ततोऽपि साम्प्रतं क्षीणा कुत्र गच्छेत् सरस्वती ॥२९

छात्रैर्नाद्रियते भाव ! गुरुभिर्नापि पूज्यते ।
धिक्कृतोभयतोजाता निरालम्बा सरस्वती ॥३०

छात्रा दुर्मेधसो यत्र दुश्शीलाश्चैव शिक्षकाः ।
तस्मिन् विद्यालये भाव ! शारदा बत रोदिति ॥३१

प्राचार्यस्यासने हन्त ! छात्रसंघविनायकम् ।
स्थापयित्वाभ्यसन्त्येते शैलूषा इव नर्तनम् ॥३२

दर्शने गमने वाचि वार्तालापेऽथ भाषणे ।
आचार्याणां समक्षञ्च नौद्धत्यं परिहीयते ॥३३

उपलभ्य धनं स्तोकं य आचारं विमुञ्चति ।
तस्मा आचार्यवर्याय नमन्ति बटवः सखे ! ॥३४

यद्वर्त्म शर्कराहीनं गुरुभिर्यत्नतः कृतम् ।
तदेव बत ! तच्छिष्यैरकारि कण्टकाकुलम् ॥३५

अधीष्व पुत्रकाधीष्व पित्रोर्वचनमीदृशम् ।
अभूदपार्थमद्यत्वे गुरुभ्योऽर्थप्रदानतः ॥३६

०—०

# १०. नेतृनयः

चतुर्विधा रमन्तेऽस्मिञ्जना जगति शाश्वतम् ।
उत्कोचका धनलुब्धा दुष्कृतो जननायकाः ॥ १

व्यवहारेऽत्र नेतृणां भारते वचनद्वयम् ।
परोपकारः पापाय पुण्याय परपीडनम् ॥ २

यत्र भोगेश्वरो नेता यत्र साहसिकोऽनुगः ।
तत्र निर्वाचन – द्वन्द्वे विजयश्री—विराजते ॥ ३

स्नेहं दयाञ्च सौख्यञ्च मुञ्चन् रामो न विव्यथे ।
कृतं सौख्येन नेतारो वर्तयन्ते हि रामवत् ॥ ४

प्राप्ते निर्वाचने काले मृदूनि कुसुमादपि ।
याते वज्रकठोराणि चेतांसि जननेतृणाम् ॥ ५

आकण्ठं पीतमाघ्वीको द्रव्यानलविदग्धधीः ।
दुरोदरपटुर्नेता यद्वातद्वा करिष्यति ॥ ६

दत्वार्थं मतदातृभ्यः कुर्वाणो मतसंग्रहम् ।
संसदि सचिवो भूत्वा यद्वातद्वा करिष्यति ॥ ७

मतदातृन् वशीकृत्य साहसिकैरुदायुधैः ।
निर्वाचने जयं प्राप्य यद्वातद्वा करिष्यति ॥ ८

पञ्चमे हायने नेता दर्शयत्याननं स्वकम् ।
चाटवद्याचते छन्दं स्वच्छन्दो जायते ततः ॥ ९

चतुर्विधा लभन्तेऽस्मिन् लोकेकीर्तिं गरीयसीम् ।
नर्तका लोकनेतारो गायकश्च विदूषकाः ॥१०

पुरासन्नभिनेतारो लोकरञ्जनकारिणः ।
साम्प्रतं सन्ति नेतारोऽलोकरञ्जनकारिणः ॥११

ऊष्माधिक्ये पुनश्शैत्यं शैत्याधिक्ये किलोष्मताम् ।
समत्वं कांक्षति क्वापि कुतोऽपि जननायकः ॥१२

शैत्ये पटेन लीनास्य ऊष्मणि संवृताननः ।
अनावृतमुखो नेता केन दृष्ट कुतः कलौ ? ॥१३

कदाचिच्छ्रूयते वामां कदाचिद् दक्षिणां दिशम् ।
एकदा रोचते शीतमन्यदा चोष्णकं पयः ॥१४

यूयं वयं वयं यूयमिति नीतिरसाम्प्रतम् ।
भेदोपायेन वै शास्ति नेता कूटविचक्षणः ॥१५

उदरम्भरिनेतारो दुरात्मानश्च मन्त्रिणः ।
नियतं विषये तत्र नरके पतति प्रजा ॥१६

कुतो देशोन्नतिर्भाव ! कुतो च स्वच्छशासनम् ।
एभिरनार्यजुष्टैर्हि राजनीतिर्विधीयते ॥१७

जनतन्त्रमहं मन्ये वित्ततन्त्रापराभिधम् ।
पलाण्डुप्रतिमोयत्र मतक्रयो विधीयते ॥१८

अर्थस्य पुरूषो दास इति प्रमाणितं वचः ।
छन्दकेभ्यो धनं दत्वा छन्दसंग्राहकैर्नृभिः ॥१९

हायने पञ्चमे षष्टे वा यो विशति संसदम् ।
ग्रामणीः प्रभुतां प्राप्य ग्रामं त्यक्त्वा समोदते ॥२०

नायकेन हि किन्तेन यो न धावन् समागतः ।
अश्रुसम्मार्जन कर्तुं वृद्धबालकयोषिताम् ॥२१

आश्वास्य सर्वभद्रत्वं दिवास्वप्नैर्विमोह्य च ।
स्मरत्यापदि नो बन्धून् स वै नेता विशिष्यते ॥२२

माणिक्यरहिताश्शैलाः कुतो मुक्ताफलं गजे ।
वनं निश्चन्दनं जातं नेतरि भाव ! शासति ॥२३

नेतृणामेकरूपत्वं केन द्रष्टं कलौ युगे ।
सम्पत्तावग्रतो यानं विपत्तौ च पलायनम् ॥२४

त एव वर्त्मं कुर्वन्ति भवतां कण्टकाचितम् ।
येषां कृते हि मार्गंवै भवद्भि सुभगं कृतम् ॥२५

कथमप्यत्र किं कोऽपि कस्मैचिद्ददते पदम् ।
भूमौ निपात्य यो याति सवै नेता प्रकीर्यते ॥२६

शकुनयोऽथनेतारो दुश्शासनाश्चमन्त्रिणः ।
राष्ट्राध्यक्षो धृतराष्ट्रः भारते भारतं महत् ॥२७

मतदानाय लब्धार्थो विक्रीणाति स्वदेहिनम् ।
नूनं राष्ट्रहितं तेन स्वार्थाग्नौ भस्मसात्कृतम् ॥२८

गृहीतार्थोऽपि यो जन्तुर्वदान्यं प्रति निस्पृहः ।
उभयलोकविभ्रष्टे कस्तस्मिन् विश्वसेदहो ॥२९

नेतृन् भावयतेत्युक्त्वा मतदातृन्विलोभ्य च ।
स्वश्रेयः समवाप्नोति सवै युक्ततमो जनः ॥३०

प्रजानांमेव भूत्यर्थं याचे मतमिति ब्रुवन् ।
येनायाचकतावाप्ता सवै युक्ततमः कलौ ॥३१

दिनारम्भे सुवर्णाभो दिनान्ते पित्तलप्रभः ।
सम्पत्तौ च विपत्तौ च नेतृणामेकवर्णता ॥३२

नेतृणां चारविन्दानां सदृशी वृत्तयोजना ।
विकसन्ति दिनारम्भे म्लायन्ति च दिनक्षये ॥३३

रूपं यदि हि नेतृणां दधते नूतनतां क्षणे ! ।
मागाः खेदं स्मरन्भाव ! तेषां हि रामणीयकम् ॥३४

अमोघाद्रामबाद् गरीयान्मतसायकः ।
हत्वैकः पुनरायाति नित्यमन्यो हि कृन्तति ॥३५

पङ्ग्वन्धन्यायवद् भाव ! नेतारो जनससदि ।
परस्परं प्रशंसन्ति हयहो दृष्टिरहो गतिः ॥३६

नैवोत्कर्ष – मतिर्याति जनाकुलितसंसदि ।
२वे खेर्मन्दायते तेजो व्योमन्याच्छादिते घनैः ॥३७

नराणामयुतं वीक्ष्य गच्छन्ममहालयम् ।
चित्तं नो व्यथतेयस्य नेता सैव युधिष्ठिरः ॥३८

यदस्ति हृदि तद्भिन्नं यस्य वचसि वर्तते ।
कर्मणि च किमप्यन्यत् स नूनं नायकोत्तमः ॥३९

भ्रष्टाचारोऽपि चेज्जन्तुर्भजते दलनायकम् ।
अनन्यत्वेन भो भाव ! सम्यग्व्यवसितोहिसः ॥४०

साधुरेव सम्प्रत्यो भक्तिस्तत्रास्ति कारणम् ।
सत्यं तपो यशश्शौर्यं प्रातिरिच्य प्रतिष्ठते ॥४१

द्वि वह्निः क्वोज्झिरते शैत्यं क्व च दाहकतां हिमम् ।
दलविनियमं वीक्ष्य कः कस्मिन्निह विश्वसेत् ॥४२

सदिवैभवभ्रान्ताः शैलूषाश्च कुशीलवाः ।
प्रशंसन्ति भिक्षुशीलं महोरूपमहोत्तमिः ॥४३

पङ्गुः स्कन्धसमारूढो नुदत्यन्धं पदे पदे ।
तमसावृतनेतासौ न जानाति क्व गम्यते ॥४४

हिरण्यविमुखः पूर्वं नेता सेवापरायण ।
संसदि लब्धसाचिव्यो हिरण्यकषिपुः स्मृतः ॥४५

नेत्रा सार्धं पुरा भाव ! गच्छति स्म महाजनः ।
एकाकी साम्प्रतं हन्त ! विषण्णः परिलक्ष्यते ॥४६

अग्रतो जनता खिन्ना जननेता च पृष्ठतः ।
द्वयोः समागमो भाव कुत्रास्ते जनसंसदि ॥४७

निवृत्य संसदो नेता वस्त्रालङ्कारशोभनाम् ।
भार्यां वीक्ष्य महासौधे सुदामेवास्ति हर्षितः ॥४८

ह्री जानुचङ्क्रमणे हीनो योऽसौ धावति सर्वतः ।
चारणात्वाद् दलस्याद्य ग्रामणीत्वे प्रतिष्ठितः ॥४९

पेटिकायां द्विजिह्वांश्च भुजङ्गांश्च वहन्नसौ ।
तान्नर्तयति कालेऽङ्ग ! नेतायमाहितुण्डिकः ॥५०

भीष्मे वर्षति पर्जन्ये किंवा जाते कुवर्षणे ।
क्षेत्रं नेतुर्हि निर्बाधं दृष्टं धान्य- समाकुलम् ॥५१

यमेष वृणुते नेता चारणत्वेन संसदि ।
अलभ्यं वस्तु भूलोके तस्मै न विद्यते क्वचित् ॥५२

मधु तिष्ठति जिह्वाग्रे मानसं सर्पिषावृतम् ।
उभयोस्तुल्यसंयोगो नेतृणां वाक्सु कर्मसु ॥५३

कुत्र गच्छसि भाव ! त्वं विपादिकार्दितांघ्रिकः ।
नेतृणां सदने क्वास्ति स्नेहः पादप्रलेपकः ॥५४

ग्रीवाभङ्गाभिरामत्वं स्त्रीषु यल्लक्षितं त्वया ।
प्रत्यासक्त्या तदेवेदं समधीतं हि नायकैः ॥५५

पूर्वं मुखं परावृत्य सस्नेहं भाव ! वीक्षितम् ।
पश्चादाहूयमानेऽपि केन दृष्टं शुभाननम् ॥५६

मनस्येकं वचस्येकं कर्मण्येकंहि नेतृणाम् ।
अनन्तरं मतादानाद् विपर्यस्तमजायत ॥५७

चतुष्पथे स्थितां भाव ! नेतुः कज्जलनिर्मिताम् ।
शोभनां प्रतिमां वीक्ष्य प्रथिता भाववीचयः ॥५८

प्राग्निदेशं शिरोधार्यं प्राणोत्सर्गो जनैः कृतः ।
साम्प्रतं वायसैर्भवि ! धृतोसर्गपरम्परा ॥५९

कामं पूर्वं तुलारूढो दोलासम्मितमानसः ।
असौ दिवङ्गतो नेता प्रज्ञास्थैर्यमवाप्तवान् ॥६०

परापरविभागेऽथ वामदक्षिणनिःस्पृहः ।
उच्चारितेऽपशब्देऽपि न मनागपि दुःखितः ॥६१

दीप इव निवातस्थो विषमेऽप्यविकम्पितः ।
अम्भसि पद्मपर्णाभो निःसङ्गो विषयान्प्रति ॥६२

पक्षविपक्षयोर्मध्ये सम्पन्नेऽपि रणोत्सवे ।
पाणिञ्चक्रायमाणोऽसौ क्व दृष्टो हरिसन्निभः ॥६३

स्वपक्षविजये भाव ! विपक्षस्य पराभवे ।
समत्वाद् धृष्यते नैव न च द्वेष्टि समाहितः ॥६४

तीक्ष्णे वर्षति पर्जन्ये गर्जति वा प्रभञ्जने ।
चण्डांशौ तपति ग्रीष्मे नासौ शरणमिच्छति ॥६५

रिपवः खण्डशः कर्तुं चेदायान्ति धृतायुधाः ।
केन दृष्टोऽधुना भाव ! स्वल्पोऽप्याकार विभ्रमः ॥६६

कौशिकाः कटुवाग्ध्वाना भक्ता वा स्तुतिनिस्स्वनाः ।
परिवार्यापि जन्माब्दे नोद्वेजयन्ति मानसम् ॥६७

सत्वरजस्तमोभिश्च न गुणैर्बद्धविग्रहः ।
त्रिगुणातीतवन्नेता युञ्जान इव राजते ॥६८

तज्जलान इति ब्रह्मेव सामर्थ्यं यस्य विश्रुतम् ।
सैव प्रतिष्ठितप्राणो गत प्राण इव स्थितः ॥६९

त्रैगुण्यविषयो नेता निस्त्रैगुण्यमवाप्तवान् ।
चतुष्पथे स्थितोऽप्येषः पुरूषार्थे गतस्पृहः ॥७०

चतुष्पथे स्थितोरक्षी नेतारं प्रति वीक्षते ।
दर्शको वर्त्मनामस्मि किमेष कुरुते हरे ! ॥७१

उर्ध्वबाहुरयं नेता विधिग्रन्थसमन्वितः ।
पाषणप्रतिमो भाव ! व्यासवद्वक्ति किंरुदन् ॥७२

संसद्भूमिं परित्यज्य बहिरागत्य विश्रुतः ।
भीमारावः सभामध्ये स्तम्भेतिष्ठत्यरावबत् ॥७३

कालाक्षरं विजानीते नेता सैरिभमागतम् ।
बालिशानां सभायांस स्तब्धः सन्पुङ्गवायते ॥७४

त्रिपुण्डालङ्कृतो भालः मालाभिश्च शिरोधरा ।
काषायमण्डितो देहो नेनृत्वं क्व पलायितम् ? ॥७५

निर्विपादिक -- पादत्वाद ज्ञातपरिवेदनः । देव
व्योम्निभ्रमणशीलोऽयं न वेत्ति भूपदक्रमम् ॥७६

गाहन्तां महिषीव ग्रामतटिनीं जाते मयि मन्त्रिणि ।
स्वैरं वद्धकदम्बको मम करच्छायातले जृम्भताम् ॥
विश्रव्धं क्रियताञ्च चारणगणो वित्तार्जनं भूरिशः ।
विश्रामं लभताञ्च दण्डनयतान्यायः सुखं खेलतु ॥७७

०—०

# ११. कलिकीर्तनम्

मीलितं नयनद्वन्द्वं पिहितं श्रवणद्वयम् ।<br>
मुद्रितं चेन्मुखं भाव ! ततो जीवसि जीवसि ॥ १

राजमार्गे गतप्राणं निमाल्य शुष्कलोचनः ।<br>
प्रयात्युपेक्ष्य यो देहं स विदेहोमतिर्मम ॥ २

विधिना हृदयं यस्य वज्रकोऽत्रा विनिर्मितम् ।<br>
स निवसति लोकेऽस्मिन् पद्मपत्रमिवाम्भसि ॥ ३

रङ्कोटजेऽग्निसन्दीप्ते स्वगृहं निकषा सखे ! ।<br>
निवाते दीपवत्तिष्ठन् नेङ्गते मतिमान्नरः ॥ ४

नेश्वरो भाव ! हृद्देशे तिष्ठन्कर्माणि पश्यति ।<br>
इति मत्वा रमन्ते ये तेषां प्रज्ञा प्रतिष्ठिता ॥ ५

परेषां वैभवं वीक्ष्य चेदीर्ष्या सम्प्रजायते ;<br>
निरोधे मा मनः कार्षीर्निसर्गस्तत्र कारणम् ॥ ६

कुन्दोज्ज्वलमुखं लक्ष्या यःकृष्णं कर्तुमिच्छति ।<br>
सैव सौख्यमवाप्नोति सर्वत्रैवाभिनन्दितः ॥ ७

नवनीतसमाकारं हृदयं यस्य विद्यते ।<br>
विमलन्नेव विश्वाग्नौ कष्टं प्राणान् वहत्यसौ ॥ ८

अस्मिन्मायामये विश्वे मायीव वृत्तिरिष्यते ।<br>
मायिनो यान्ति साफल्यं वैफल्यं खल्वमायिनः ॥ ९

मर्यादापालने दक्षो रामभद्रोऽपि वानरम् ।<br>
प्रच्छन्नीभूय बालिं प्राहिणोद्यममन्दिरम् ॥१०

न्यायेषु प्रमुखो न्यायः काकाक्षिगोलकः स्मृतः ।<br>
अध्याहारो हि वित्तस्य वाक्येषु यत्र सम्मतः ॥११

सन्तोषामृतमित्युक्तं कविना येन वै सखे ! ।<br>
विकासवर्त्मनो रोधे तेनाध्रियत मानसम् ॥१२

सर्वंगुह्यं प्रशस्यञ्च शृणु मे वचनामृतम् ।
कलांशमपि संभोगाद् विरतं मा कुरु मानसम् ॥१३

कलौ नाम्नो गरीयस्त्वं कर्मणः समुदीरितम् ।
मतपत्रमतो भाव ! क्रियते नाममुद्रितम् ॥१४

आत्मानमुद्धरेन्मित्र ! सङ्कटैः परिवारितः ।
वैधेनाप्यवैधेन विधिना मतिमान्नरः ॥१५

मरणाज्जीवितंश्रेयो जीवन् भोगान् समश्नुते ।
अथोपायैश्चतुर्भिर्हि भोग्यसंग्रहणोचितम् ॥१६

उग्राणि कुरु कर्माणि यैरधर्मः प्रवर्धते ।
नान्यथा जायते भाव ! संबुभूषा हरेर्हृदि ॥१७

कलौ हि भगवान् साक्षाद् भक्तान्दर्शयते स्वकम् ।
गरीयस्त्वमतो भाव ! युगेभ्योऽस्य प्रसिध्यति ॥१८

शुभ्रवस्त्रावृतो देहो मनः कल्मषकज्जलम् ।
छायाप्रकाशयोश्चित्रं समवायः कलौ युगे ॥१९

बहूनि सन्ति कार्याणि सम्पादयितुमहो हरे ! ।
चित्तमाराधाद्त्रैमे क्वचित्कचित् प्रमाद्यति ॥२०

रो धन्यो नीरो:कलेर्भक्तो दाहयन् रोमपत्तनम् ।
यो वीणां वादयामास प्रजानां चित्तमुद्वहाम् ॥२१

मातृभुवं प्रसह्यायं कुरुते पितृकाननम् ।
अतो हि निजभक्तान्वै नियुङ्क्ते हेतिसंग्रहे ॥२२

अद्योप्ता—न्याम्रबीजानि जायन्ते कण्टकिद्रुमाः ।
अहो ! कलेश्चमत्कारो धन्से यन्नियतौ पदम् ॥२३ ते

समाधौ परमानन्दो मुनिभिर्लभ्यते नवा ।
परनिन्दारसास्वादः प्रत्यहं सुलभःकलौ ॥२४

दुर्घटनापि भो भाव ! सुखदा जायते कलौ ।
आहृत्य मृतकाद्वित्तमारक्षी यत्र मोदते ॥२५

गेहद्वारिवचः क्लिष्टमूचतुश्शुकसारिके ।
सारमेय – मधुध्वानः कर्णप्रीतिकरः कलौ ॥२६

यदा शक्तिर्जनासक्ता जाता राजनये सखे ! ।
तदैवाङ्गद्राष्ट्रे कलिना स्थापितं पदम् ॥२७

विभाति यत्र नो भास्वान् न चेमाश्चन्द्रतारकाः ।
गहने तत्र तामिस्रे कलिः साम्राज्यमीहते ॥२८

विषाक्तं पवनं घ्रात्वा प्रयाता यममन्दिरम् ।
जना सहस्रशो भाव ! शुचं मनसिमाकृथाः ॥२९

एतत्कर्म कलौ भाव ! शुभं स्वस्ति प्रदायकम् ।
भूभारहरणे हेतुर्जनसंख्याल्पकारकम् ॥३०

जाह्नवी यदि वर्षासु वहत्युद्दामवेगतः ।
ट नाशयन्ती तद्ग्रामान् विद्धित्तां क्षेमकारिणीम् ॥३१

उर्वरा जायते भूमिर्हरितशस्यभूषिता ।
प्रभूतान्न प्रदानात्सा जननीव प्रतिष्ठिता ॥३२

नारिकेलसमं तस्याः कठोरं वाह्यतो मनः ।
आभ्यन्तरं रसेनार्द्रं सुधाकलशसन्निभम् ॥३३

साधुतां पृष्ठतःकृत्वा पुरस्तादथ दुष्टताम् ।
प्रशस्यं वर्तनं लोके यदि जीवितुमर्हसि ॥३४

किन्तेन साधुभावेन यः समर्थो न रक्षितुम् ।
स्वात्मानमपि लोकेऽस्मिन् वीक्ष्य दुष्कृतिसंवृतम् ॥३५

साधवोऽपीह जायन्ते प्रखरैर्नखरैः सह ।
साधुभावस्य रक्षायै प्रयोगः केन वार्यते ॥३६

ते हि जगति जीवन्ति ये तिष्ठन्त्युद्यतायुधाः ।
भगवता क्व साहाय्यं दत्तं निष्क्रियजन्तवे ॥३७

अङ्गान्यल्पवासांसि मनो विषयलालसम् ।
अनयग्राहिणी बुद्धिश्चेतः खद्योतभास्वरम् ॥३८

अहम्भावभरं कर्म प्रीतिर्द्यूतादिक्रीडने ।
रुचिर्मादकद्रव्येषु प्रसक्तिर्वारयोषिति ॥३९

स्थानान्येतानि सत्राणि मोदप्रीतिकराणि वै ।
दुर्गुणानि मृषैवेह गण्यन्ते नयवादिभिः ॥४०

अयस्कान्तो यथा लोहमाकर्षति दृढं सखे ! ।
तथैव हि कलिः प्राज्ञान् समाकृष्य प्रहृष्यति ॥४१

बलिनावर्थकामौ हि भुजौ कलिमहीपतेः ।
प्रजाविग्रहमालिङ्ग्य मोदेते सुखमास्थितौ ॥४२

अस्तमितः कलौ भेदो नरनार्योर्विशेषतः ।
एकस्त्रैणायते भाव ! चापरा पुरुषायते ॥४३

तमस्तदग्र इत्युक्त्वा प्रशशंस श्रुतिः कलिम् ।
अन्येऽपि तमसो व्याप्तिमित्यतः कलिगौरवम् ॥४४

प्रकृत्या योऋजुःसोऽपि विधृत्यर्जुनवद्धनुः ।
स्वभ्रातृन्बान्धवान् हन्तुं कलौ भवति तत्परः ॥४५

अज्ञानं चाप्यसत्यञ्च द्वेऽप्यैवानन्ततां गते ।
ब्रह्माणि यदनन्तत्वं तद्विद्धि कलिलक्षणे ॥४६

सम्पत्तौ वा विपत्तौ वा कलित्वं याति कोविदः ।
मार्तण्ड इव ताम्राक्ष उदयेऽस्तंगतेऽपि च ॥४७

शयानत्वात्कलेः सर्वे सुखं जीवन्ति जन्तवः ।
संजिहानश्चरञ्जाग्रन् नरो भवति दुःखभाक् ॥४८

हरे राम ! हरे राम ! ब्रुवन्ना लभते बलिम् ।
कलौ नाम्नो हि वैशिष्ट्यं पञ्जरस्थः शुको यथा ॥४९

कृते राजनि निश्शेषं शक्तिरासीत् समाहिता ।
कलौ सा जायते भाव ! संघेषु भूरि संस्थिता ॥५०

अष्टौ समेत्य दिग्देवाः पार्थिवाय ददुर्बलम् ।
संघानां बहुसंख्यात्वत् कलौ तत् स्फुटते बहु ॥५१

हेतुनानेन संघेषु कलिर्याति समृद्धताम् ।
वार्तापत्राणि दृश्यन्ते पूर्णानि कलिकीर्तनैः ॥५२

पितरौ नेत्रहीनौ यो भजते श्रवणोपमः ।
ध्रुवं स हास्यतां याति विमूढः कलिशासने ॥५३

प्रिया भार्या प्रियाः पुत्राः प्रियं जीवितयौवनम् ।
निष्क्रियौ पितरौ रुग्णौ क्व प्रियार्हौ कलौ सखे ! ॥५४

पीतोदका जग्धतृणा दुग्धदोहा निरीन्द्रियाः ।
धेनवः खलु नीयन्ते यथा सूनानिकेतनम् ॥५५

न तथा पितरौ भाव ! कलावपार्थजीवितौ ।
किमन्यत्साधुभावस्य निदर्शनमिह मृग्यते ॥५६

धन्यास्ते तनया लोके सच्चरिता यशस्विनः ।
प्रयागं यैर्हि पुण्याय प्रेषितौ पितरौ सखे ! ॥५७

नारदो वै कलेर्भक्तो नारायणेत्यप्युदगृणन् ।
वपते कलिबीजानि देवानामपि मानसे ॥५८

द्यूतं पानं स्त्रियः सूना स्थानानि कलये ददौ ।
इति भागवते दिष्टं वचः सत्यं न पूर्णतः ॥५९

यतो हि कलिसाम्राज्यं व्याप्तं विश्वे समन्ततः ।
भाव्यते नैव यैर्भवि ! कृतं तेषां दृगाम्बुजैः ॥६०

०—०

# १२. आतङ्ककारिणः

इष्टं यज्जनसम्भूत्यै तस्य धर्मेण योजनम् ।
महर्षिभिः कृतं पूर्वं लोकमङ्गलकांक्षिभिः ॥ १

साम्प्रतं जनमाङ्गल्यं निक्षिप्य पृष्ठत इमे ।
अन्धभक्ता महर्षीणां युद्ध्यन्ते शस्त्रपाणयः ॥ २

घ्नन्ति परस्परं भाव ! पोषयन्तो घृणां हृदि ।
बन्धुभावमपाकृत्य वैरत्वे दृढबुद्धयः ॥ ३

भ्राता वै भ्रातरं द्वेष्टि स्वसारमपि मातरः ।
मातृपित्रोः क्व सौहार्दं दौर्भाग्यं सर्वतोऽधुना ॥ ४

सौमनस्यं गतञ्चारस्तं कुत्र याता प्रियार्हता ।
यत्कृते जीवनं व्यक्तं दशभिर्गुरुभिः स्वकम् ॥ ५ त्य

पुरा पञ्चनदेष्वासन् पीयूषवर्षिणो गृहाः ।
शोणितपङ्किलातिऽद्य कृता आतङ्कवादिभिः ॥ ६

व्यालादपि हि जिह्मत्वे गरीयान् दृश्यते नरः । क्ष
सो वहिर्गमने वक्रो बहिराभ्यन्तरेष्वसौ ॥ ७

शुभ्रापारावतश्रेणी शान्तिसन्देशवाहिनी ।
निशितनखरैः क्रूरैः श्येनैराव्रियतेऽधुना ॥ ८

आतङ्ककारिणां श्रुत्वा हृत्पीडाकरीं कथाम् ।
मोदते मानसं यस्य सवै पाषणहृत्स्मृतः ॥ ९

खण्डशो हृदयं जातं कर्णौ चीत्कार पीडितौ ।
लोचने चास्रसंसिक्ते पठता वधमार्युकम् ॥१० र्भ

कीदृशं निघृणं जातं जगद्यत्र किशोरकाः ।
मुग्धा बालाश्च हन्यन्ते क्रूरैरातङ्कवादिभिः ॥११

शोणितबिन्दुभिः 'सिक्तं वार्तापत्रं प्रतीयते ।
यत्र वार्ता वधादन्या गोचरा नैव जायते ॥१२

रसास्ति शवसङ्कीर्णा सरितो रक्तरोहिताः ।
किं नृशंसैरहोलब्धं कृत्वा कर्म निदारुणम् ॥१३

वह्निपरिवृतं गेहं पूतिगन्धाश्च मारुताः ।
विलापभरितं व्योम विश्वंनरकसन्निभम् ॥१४

आतङ्कवाभिर्हत्वा स्वजनान् बान्धवान् सखे ! ।
मातृभूः स्नापिता भाव ! शोणशोणितधारया ॥१५

ज्ञातीनां रुधिरैः रक्तं करं क्षालयितुं सखे ! ।
अद्यत्वे किमपि द्रव्यं विधिना न विनिर्मितम् ॥१६

उत्सङ्गाग्रहिणो भाव ! स्निग्धमुग्धविलोचनान् ।
हेलायैकृतनिर्बन्धान् को हन्यादर्भकान्नरः ? ॥१७

वज्रं वृत्रहणं भाव ! याचित्वा विधिना कृतम् ।
मानसं नृपन्शोस्तस्य यै वै हन्ति स्तनन्धयान् ॥१८

विमोचनार्थकारातः साहसिकानद्य दुर्जनाः ।
कन्यकां मन्त्रिणोहत्वा साधयन्ति निजेप्सितम् ॥१९

यत्रासीदवनी भाव ! कुङ्कुमगन्धवासिता ।
पूयगन्धपरिव्याप्तं तत्रास्ति निखिलंस्थलम् ॥२०

केसरदीप्तसीमन्ता भट्टानां शारदावनिः ।
बट्टैः सम्प्रति धर्मान्धैः क्रियते रक्तलाञ्छिता ॥२१

मम्मटप्रमुखैर्यस्या भट्टैर्नीराजनं कृतम् ।
शारदा साद्यबट्टैर्हि ग्रावभिः खण्डिता कृता ॥२२

जगदुपवने भाव ! पुष्पमासीद्विकस्वरम् ।
जघन्यैर्जालिमकैर्हन्त ! तत्संसमूलं विमर्दितम् ॥२३

स्तनन्धयानपि क्रोडाज् जनन्या हरणोद्यताः ।
जिघांसवो धनावाप्त्यै वधमर्हन्ति तत्क्षणम् ॥२४

एतेषां ननु संसर्गात् पापबुद्धिः प्रजायते ।
भोगे प्रवर्धते लिप्सा धर्मश्च परिहीयते ॥२५

प्रत्यग्रं लोहितं चण्डि ! लाक्षारससमुज्ज्वलम् ।
स्यन्दते सर्वतो भूमौ कथं शोणौ न त्वत्पदौ ॥२६

आततायिनमायान्तं हन्यादिति मनुर्जगौ ।
किमर्थं कः प्रतीक्षेत हरेरवतरणं भुवि ॥२७

पदे पदे यदा भूमिर्जाता शोणितपङ्किला ।
दृष्टिपूतं कथं पादं न्यसेन्मनुरपि क्षितौ ॥२८

अविचार्यैव हन्तव्य आततायी दुरासदः ।
नखराणां प्रयोगात् किं साधुता परिहीयते ॥२९

रावणाङ्कस्थिता सीता तस्य वक्षस्थलं ध्रुवम् ।
हस्ताभ्यांस्ताडयाञ्चक्रे मुखानि चिच्छिदे नखैः ॥३०

हा राम ! राम रामेति विलपन्त्यपि जानकी ।
मुष्टिघातं दशस्कन्धं प्राहरद्व्योमवर्त्मनि ॥३१

जघन्यैर्युवभिः कैश्चित् तैलं प्रक्षिप्य निर्घृणैः ।
वपुः प्रदाह्य मुग्धायाः किं पौरुषमुपार्जितम् ॥३२

आरक्षणस्य न्यायत्वं प्रसज्येत न वा सखे ! ।
किं पुण्यमर्ज्यते भाव ! ग्रहणात् पापवर्त्मनः ॥३३

रेलगन्त्री प्रकोष्ठानां दाहनं होमकल्पकम् ।
मानवा यत्र हूयन्ते मन्त्रैः कुवाच्यसन्निभैः ॥३४

भूरियं शोणितक्लिन्ना चामगन्धं भुवस्स्थलम् ।
स्रव्याप्तं सविषैर्वातैर्व्याहृतयः पुषन्ति कान् ॥३५

कृष्णो मुहम्मदः ख्रीष्टो यहोवाश्च तथागतः ।
सर्वे जाता जडात्मानः संवीक्ष्य कदनं भुवि ॥३६

सर्वे ते साधवो जाता दुष्कृतः पापबुद्धयः ।
परित्राणाय येषां वै भूयोऽवतरणं कृतम् ॥३७

अस्माकं नाम संकीर्त्य पाणिविधृतहेतयः ।
अविचार्यैव कुर्वन्ति वधं नृबालयोषिताम् ॥३८

साधूनां हृदयं जातं वज्रादपि कठोरकम् ।
पुष्पं यन्मृदु संजातं तदिदं कण्टकायते ॥३९

वसुधेयं गुरुणांवै तपोभूभिरिवस्थिता ।
शिष्यैरद्य कृता हन्त ! पितृभूमिनिभा सखे ! ॥४०

दयादाक्षिण्यशौर्येभ्यः ख्यातं पञ्चनदस्थलम् ।
क्रूरत्वान्निघृणत्वाच्च जातमातङ्कसंकुलम् ॥४१

प्रत्यहं श्रूयते वार्ता निरीहामुग्धभ्रातरः ।
भ्रातृभिरेव हन्यन्ते आग्नेयास्त्रैर्दिवानिशम् ॥४२

०—०

# १३. धर्मध्वजिनः

रजनीशा महेशाश्च चन्द्राश्च बालयोगिनः ।
तान्त्रिकाश्शतशो लोके सम्भूता अवतारिणः ॥ १

अपि स्पृशति धर्मस्य ग्लानिः सर्वोच्चकोटिताम् ? ।
यां वै नाशयितुं भाव ! सन्तीमे बद्धमध्यमाः ॥ २

पुरा हरिः किलैकाकी शशाक साधुरक्षणे ।
साम्प्रतं हीनसत्वत्वात् किं दध्रे बहुरूपताम् ॥ ३

इमे सर्वे दरिद्रान्नो भरन्ते विश्वविश्रुताः ।
ऐश्वर्येण हि सम्पन्नाः सन्ति तेषां गणाधिपाः ॥ ४

सर्वसाधन – सम्पन्नं पञ्चतारासमे गृहे ।
तपश्चर्यां प्रकुर्वाणा विस्मापयन्ति बालिशान् ॥ ५

सम्भोगेऽस्थितप्रज्ञानाः प्रमदानां समागमे ।
यापयन्ति निशां चित्रं ! भोगिनो योगिनः कथम् ॥ ६

अर्थार्जने निरीहाणां कोशागारेषु सञ्चितम् ।
द्रव्यं स्थिरनिधावेषां निस्पृहत्वं हि शंसति ॥ ७

तापसानां तपोभङ्गं विदधातुं सुरेश्वरः ।
प्राहिणोद्या भयाक्रान्तोऽप्सरसः पृथिवीतलम् ॥ ८

साम्प्रतं स्वयमाकृष्टास्तादृश्यो वामलोचनाः ।
कलिभगवतोवृत्वा नृत्यन्ति मदविह्वलाः ॥ ९

भोगत्यागावुभौ यत्र नातिशय्येन गर्हितौ ।
मर्यादातिक्रमणाद् वै क्व शान्तिः क्वच निर्वृतिः ॥१०

परित्राणाय नु केषां विनाशाय च भूतले ।
किमर्थं सम्भवन्त्येते रहस्यं किल विद्यते ॥११

भोगसंसक्तदेशेषु लभमाना महादरम् ।
जायन्ते धन सम्पन्ना भुञ्जाना विषयान् बहून् ॥१२

धर्मग्लानेः पुरा भाव ! कलिर्हेतुरिति स्मृतम् ।
साम्प्रतं धर्म एवैषः कलेः प्रसवकारणम् ॥१३

दशकं मनुना यद्धि धर्मस्य लक्षणं कृतम् ।
तस्मिन् भगवतो नाम्नोऽग्रहणं नास्त्यकारणम् ॥१४

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
इत्येव हरिसन्देशः प्रसादाय भविष्यति ॥१५

किमद्य तेन धर्मेण सततं विग्रहात्मना ।
रक्षायै यस्य रक्तेन क्रियते पङ्किला मही ॥१६

कृतमनेन धर्मेण शोणिताप्लुतवर्त्मना ।
यस्मिन्वेशोऽपि भाषापि नरघातं चिकीर्षति ॥१७

एक एव सुहृद्धर्मो मृषैव भणितिरियम् ।
यन्मिथो धर्मिणो दृष्टा वैरभग्ना जिघांसवः ॥१८

धर्मैक्यं दीपकमिति यद्बुधैः प्रतिपादितम् ।
तमसावृत्य सो दीप एभिर्निर्वापितः सखे ! ॥१९

अर्द्धचन्द्रमहो दत्वा सद्धर्मो यैर्विनाशितः ।
ते हि सन्ति सपर्यार्पुं बत ! धर्मस्य विग्रहे ॥२०

o—o

# १४. प्रदीपदशकम्

सूचीभेद्यं तमो भाव ! सर्वास्वाशासु प्रसृतम् ।
भिद्यते क्षुद्रदीपेन चित्रं सत्त्वैकनिष्ठता ॥ १

चम्पककलिकाकारा प्रदीपस्योज्ज्वला शिखा ।
छुरिकेवातिमृद्वीयं भिनत्ति तिमिराशयम् ॥ २

निशायां राक्षसा भाव विचरन्ति भयंङ्कराः ।
तेषां मुखानिलिम्पन्ति कज्जलेनैव दीपकाः ॥ ३

पुरः प्रयान्तमर्कं वै गृहीतुं यतते निशा ।
विधातुं वर्त्म संबाधं दीपो भाभिःप्रकाशते ॥ ४

चतुष्पथे धृतो दीपः स्वात्मानं दाहयन्नपि ।
भ्रान्तान् दर्शयते मार्गमहो वृत्तिर्महात्मनाम् ॥ ५

मध्येवर्त्म हसन्दीपो वातेरितशिखोऽप्यसौ ।
मनोज्ञं मरणं मत्वा सहसा दीप्यते भृशम् ॥ ६

येन प्रज्वालितो दीपस्तूलमृत्तैलविग्रहः ।
र्चि अर्विषो रूपमास्थाय तस्यैवात्मा प्रकाशते ॥ ७

द्वारि संस्थापितो दीपः कज्जलमुग्दिरन्निव । ग्द्रि
दाहयन्स्वात्मनः पापं अन्येभ्यो ददते प्रभाम् ॥ ८

वहति प्रखरे वायौ स्नेहपूर्णः प्रदीपकः ।
तमोविग्रहसंल्लग्नः कान्दिशीको न वीक्षितः ॥ ९

घटकर्परवत्तुच्छो वधूटीकर योजितः ।
स्मृत्वा स्नेहं प्रियस्पर्शं ज्वलन्मोदं समश्नुते ॥१०

०—०

# १५. विद्या ह्वै ब्राह्मणमाजगाम

निर्गत्य मन्दिराद् विद्या पृच्छन्ती ब्रह्मणो गृहम् ।
इतस्ततो दिवा नक्तं बभ्राम भाग्यदोषतः ॥ १

विजिह्वगमना भाव ! मलिनाम्बरधारिणी ।
शिक्षागुरुं समासाद्य गोपायेत्यसकृज्जगौ ॥ २

कुन्दोज्ज्वलमुखं तस्या आसीद्मसीमलीमसम् ।
अञ्जनं नेत्रयोर्हन्त ! गण्डमण्डनतां दधे ॥ ३

खण्डितः कोऽपि सद्ग्रन्थः शुशुभे दक्षिणे करे ।
वामे वीणाञ्च सादध्रे विश्रृंखलिततन्त्रिकाम् ॥ ४

का त्वं कुतः समायाता केनादेशि गृहं मम ।
इति पप्रच्छ साकूतं मिश्रः कुक्कुटसंज्ञकः ॥ ५

अहो! किं नाभिजानासि विश्रुतां मां सरस्वतीम् ? ।
वाणीलाशारदाविद्या वागिति नामभिः स्मृताम् ॥ ६

त्रिपथगास्मि गङ्गेव पुनामि यशसा महीम् ।
विपर्यासाद् विद्येरद्य जाता क्षीणा निरादृता ॥ ७

अतपस्का निगृह्णन्ति दुष्कृतश्चाभ्यसूयकाः ।
अनृजवश्च भो ब्रह्मन् ! पाहि मां शरणागताम् ॥ ८

तारस्वरं गुरुर्विद्यां प्रत्युवाच गतत्रपः ।
भवति ! नैव जाने त्वां नो जाता कर्णगोचरा ॥ ९

बहुत्वं किञ्च ते नाम्नो व्यनक्ति बहुरुपताम् ।
को नाम विश्वसेज्जन्तुः स्त्रीषु मायाविनीस्विह ॥१०

मन्ये विस्मारितं विद्ये ! वचो नीतिविदां यथा ।
अज्ञातकुलशीलाया वासो देयो न कर्हिचित् ॥११

विपद्ग्रस्तां तथापि त्वां अस्मि वीक्ष्यार्द्रमानसः ।
यत्तेऽभीष्टमयै ब्रूहि योगक्षेमवहात्मकम् ॥१२

दुष्कृद्भिरतपस्कैश्च दुर्निवारं प्रताडिता ।
कष्टं जीवामि भो ब्रह्मन् ! याचे त्राणं भयार्दिता ॥१३

शेवधिर्भवतो ह्यस्मि कोऽन्यो रक्षितुमर्हति ।
कृतविद्यश्च शूरश्च भवानेव द्विजोत्तम ! ॥१४

शस्त्राणां कलानाञ्च निरपेक्षत्वमिष्यते ।
सद्वृतो वाथ दुर्वृत्तः कोऽपि गृह्णातु वाग्यतः ॥१५

निदर्शनं पुनर्भद्रे ! विद्धि मां विचिनोष्यियम् ।
अर्थार्जनाय वै सर्वा मयाधीता इमाः कलाः ॥१६

अम्लानमतिवैदग्ध्याद् दिनत्रयेण शारदे ! ।
शास्त्रेष्वथ च विद्यासु जातोऽधीती श्रमं विना ॥१७

आचार्यपदमास्थाय महाविद्यालयेऽधुना ।
मयायुतं हि छात्राणां शिक्ष्यते नीतिरुत्तमा ॥१८

मन्त्रिणोऽपि च नेतारः कूटनीतिविशारदाः ।
दृश्यन्ते सर्वतोभद्रास्तेषामस्मि महागुरुः ॥ १९

साचिव्यं मन्त्रिणः कर्तुं चेदिच्छसि सरस्वति ! ।
मान्यस्य कस्यचिन् नाम संकीर्तय शुभानने ! ॥२०

विवत्सा यदि मग्देहे हृदये तव वर्तते । द्वे
ब्रूहि किं त्वं विजानासि गवां दोहनप्रक्रियाम् ? ॥२१

भद्रे ! मे निकषा ग्रामं विद्यते महिषीकुलम् ।
धेनूनाञ्च शताधिक्यं तन्निरीक्षितुमर्हसि ॥२२

यादवानां कुले जन्म श्रेयस्करं कलौ युगे ।
विद्याधनप्रधानत्वं दारिद्रयापरसंज्ञकम् ॥२३

अर्थ एव गरीयान्भोः पुरुषार्थ चतुष्टये ।
विदुषोऽप्यर्थशून्यस्य नूनं जन्म निरर्थकम् ॥२४

धनमवाप्तु कामस्य वृष्णीर्नोमन्वये जनिः ।
गरीयसी न विप्राणां सुदाम्ननां निरीहसाम् ॥२५

येन केनाप्युपायेन वैधेन चाप्यवैधतः ।
धनार्जने मतिं कुर्या वर्तते चेज्जिजीविषा ॥२६

श्रूयते यत्पुराकोऽपि कविरासीद्द्विजोत्तमः ।
नाम्ना माघ इतिख्यातो वदान्यश्चापि विश्रुतः ॥२७

बुभुक्षा पीडितो भद्रे ! याचकैः परिवारितः ।
स हन्त ! विजहौ प्राणान् प्रबोधयन्कलाविदः ॥२८

व्याकरणं न भोज्याय न रसाय कला मता ।
विद्याशक्ता कुलोद्धारे हिरण्यमर्जय ध्रुवम् ॥२९

स्वकुलोद्धरणे विद्ये ! विद्यते चेत्तवाग्रहः ।
हित्वा विद्याकलासक्तिं लक्ष्मीं भजस्व यत्नतः ॥३०

श्रुत्वा सर्वमिदं विद्या भार्वि! विच्छायवदना भृशम् ।
स्मारं स्मारं गुरोर्वृत्तं विजहौ ब्रह्मणो गृहम् ॥३१

काष्ठपुत्तलिकेव श्री यविन्नर्तयति द्विजम् ।
कुतस्तावदये भाव ! विद्ययामृतसंभवः ॥३२

यदुनाथसुदाम्नोर्हि यत्रैकत्र समास्थितिः ।
तत्र श्रीविद्ययोर्भावि ! प्रीतिर्भवति सौख्यदा ॥३३

०—०

# १६. मुक्तकमाणिक्यम्

वसन्तः समनुप्राप्त इति कः सूचयिष्यति ? ।
नासौ परभृतो भाव ! रसालद्रुभमाश्रयेत् ॥ १

खगो न चेत्तरोश्शाखां विहाय डयते द्यवि ।
कथं भाव ! वसन्तस्य स्वागमो ज्ञायते जनैः ॥ २

असिता छिद्यते हन्त ! पुष्पगन्धाकुला लता ।
कथं सुरभिरुद्याने दधतु पदमभीप्सितम् ॥ ३

वसन्ते वत ! सम्प्राप्ते कोकिलो मूकतां गतः ।
समाधिभङ्गभीतोऽसौ स्मरति स्मरदाहताम् ॥ ४

दाहं सख्युरयं स्मृत्वा हिमैर्द्रिर्वनराजिषु ।
शनैश्शनैः पदं धत्ते सुरभिरघशङ्कितः ॥ ५

भाव ! सुरभिमासोऽसौ साम्प्रतं किमिदं वचः ? ।
सरांसि पद्मशून्यानि नोवाति मलयानिलः ॥ ६

मधुकरी तृषार्तापि मधु पातुं न चेष्टते ।
मन्ये प्रियसहाचर्ये माधुर्यं द्विगुणायते ॥ ७

उदयाद्रि समारूढोऽरुणसारथिना सह ।
दिनेशः स्वकरैर्द्रोण्याः पादस्पर्शं प्रकुर्वते ॥ ८

कलिकाः करसंस्पर्शात् स्मेरानना विकस्वराः ।
सुरभिणा वनप्रान्तं पूरयत्यनिशं मुदा ॥ ९

किसलया हिमैर्धौता रविकरक्षतस्पृशः ।
करा इव वन-देव्या राजन्ते नृत्यवेपिताः ॥१०

तुषाराच्छादिताश्शैला बालातप - समुज्ज्वलाः ।
तप्तकाञ्चनवर्णाभाः शोभन्ते मेरुसन्निभाः ॥११

शाखामृगो नु रक्तास्यः प्लवमानः समन्ततः ।
किं झम्पप्रतियोगीव पूर्वाभ्यासे प्रवर्तितः ? ॥१२

मारुतापूरितच्छिद्राः कीचका गानकोविदाः ।
उत्कर्णितान्मृगान्भाव ! कुर्वन्ति विपिने घने ॥१३

सरःप्लवनशीलानां मरालानां मृदुस्वनाः ।
अन्यविहगसन्नादैर् मिश्रीभूय समन्ततः ॥१४

सकलां पर्वतद्रोणीं पूरयन्तो विकस्वरैः ।
विभिन्नवाद्यसम्पाद्यं प्रतन्वन्तीव गीतकम् ॥१५

कलं मन्द्रञ्च गायन्ती भ्रमराणामियं ततिः ।
लक्षीकृत्याम्बुजश्रेणीं स्मरेषुरिव धावति ॥१६

लतापुष्पनिकुञ्जेषु मधुपूर्णसुमनसाम् ।
मद्याप्लावितपात्राणि मधुपेभ्यः प्रयच्छति ॥१७

पादपमुनयस्तीरे पत्रपुष्पफलादिभिः ।
सरस्वतीं समभ्यर्च्य द्योतयन्ति कृतार्थताम् ॥१८

घने तमसि खद्योता डयमाना इतस्ततः ।
विद्युल्लेखेव राजन्ते व्योमनि मेघमेदुरे ॥१९

दीर्घापाङ्गा इमा मृग्यस् स्वन्नेत्राचलदृष्टयः ।
आयामित्वं स्वनेत्राणां विज्ञापयितुमागताः ॥२०

वसुन्धरा कुतः सर्वा अकीर्णा कण्टकैः सखे ! ।
हृद्यं किं कुसुमामोदस्तव घ्राणं न तृप्यति ॥२१

शीताम्भसा घनश्श्यामो घर्मार्त्तां सिषिचे रसाम् ।
प्रफुल्लैः पुष्पनयनैः सानिमेषं तमीक्षते ॥२२

कज्जलाभा इमे मेघाः स्नापयित्वा वसुन्धराम् ।
परिधानाय यच्छन्ति शस्यश्यामल शाटिकाम् ॥२३

चण्डांशुमुदितं वीक्ष्य तमस्तत्र निलीयते ।
यत्र सारस्वधर्मस्य गुहायां निहितो जनैः ॥२४

यमुना तामसी भाव ! जाह्नवी सात्त्विकी मता ।
सरस्वती रजोयुक्ता त्रिवेणी त्रिगुणायते ॥२५

त्रयीयं वेदविद्येव ज्ञानबलक्रियान्विता ।
सौन्दर्यशिवसत्यानां कलामानमिव स्थिता ॥२६

निदाघे विरहप्लुष्टा प्रावृषि भोगहर्षिता ।
वसन्ते भूषितापुष्पैः पृथ्वीयं प्रमदायते ॥२७

विटपोऽयं रसालस्येत्याश्वस्ता यदि वीरुधः ।
दह्यन्ते ज्वालमालाभिर्धिगियं वै रसालता ॥२८

सूर्ये समुदिते यत्र ताम्रचूडो न कूजति ।
तत्रानिशमुलूकानां शासनं वर्धते ध्रुवम् ॥२९

रक्ताप्लुतविहङ्गस्त्वं चञ्चूमुद्घाट्य चीत्कुरु ।
केन भाव ! तवोद्यानं छिन्नमूलं विनाशितम् ॥३०

मेदिनी पङ्किला जाता पङ्कप्रक्षालनं कुतः ।
मलदोषमपाकर्तुं कुत्रास्ते निर्मलं जलम् ॥३१

समुदितेऽपि चण्डांशौ प्रकाशन्ते न चेद्दिशः ।
कौशिकाः स्फोटयिष्यन्ति घुक्कारैः कर्णशष्कुलीः ॥३२

नीरदाः कज्जलश्यामा वर्षन्ति विमलं जलम् ।
कृष्णवर्णा यथा धेनुः स्रवते धवलं पयः ॥३३

हिमद्रिविन्ध्यवक्षोजा पयः पीयूषवाहिनी ।
पाययन्ती द्रुमापत्यान् भूम्यम्बा करुणायते ॥३४

आम्रारामः कथं भाव ! वेष्टितः कंटकिद्रुमैः ।
कण्ठः परभृतां छिन्न जातः शूलमर्दितः ॥३५

रक्षितो जननीगर्भे बहिरागत्य रोदिति ।
शिशुस्तद्रोदनं तस्य सर्वायुष्यं प्रवर्तते ॥३६

किमप्यस्तीदृशं तत्वं वायौ जागतिके ध्रुवम् ।
यदसमञ्जसत्वेन सातिशय्येन वर्तते ॥३७

पितरौ शिक्षका दारास्ततो सेवाधिकारिणः ।
पुत्र-पौत्रादयश्चान्ते तं कुर्वन्त्यार्द्रलोचनम् ॥३८

विवेकरहितो मोहात् सुखतृष्णां न मुञ्चति ।
विवेकी चाथ सर्वस्वं दुःखरूपं हि मन्यते ॥३९

दुःखं दुःखमिह व्याप्तं विद्यते कणिकास्वपि ।
अव्यभिचारिभावेन तत्वं दृष्टं मनीषिभिः ॥४०

दुःखापनयने जाता त्रिवर्गस्य कृतार्थता ।
ज्ञानबलक्रियाणाञ्च दुःखनाशनियोजने ॥४१

अन्धा वै प्रकृतिर्ज्ञेया पुरुषः पङ्गुरुच्यते ।
द्वयोर्मिथुनसम्भूतं निकलाङ्गं जगद् ध्रुवम् ॥४२

दुःखमयं जगत्सर्वं इति मत्वावसीदनम् ।
आत्मघातं समं भाव ! जनं पापेन लिम्पति ॥४३

सर्वाङ्गी प्रकृतिर्नैषा न सर्वाङ्गः पुरुषः स्मृतः ।
संयोगादुभयोर्भाव ! जगति क्वास्ति पूर्णता ॥४४

दृष्टमाप्रलयाद् द्वन्द्वः प्रधानपुरुषयोर्मिथः ।
यतमानोऽपि नाप्नोति दुःखान्निराकृतिं नरः ॥४५

विद्यते नैव कुत्रापि पार्थक्यं सुखदुःखयोः ।
यतो हि वेदनीयत्वमत्र प्रामाण्यमुच्यते ॥४६

उपाधिभेदनिर्णेया तयोः सर्वत्र संस्थितिः ।
वेदनीयस्य भिन्नत्वात् प्रति व्यक्ति विशेषतः ॥४७

परभृता मृदुध्वानाः पोषयितुं निजार्भकान् ।
बलिभुजां कुलायेषु जायन्ते मौनिनः सखे ! ॥४८

निसर्गे नीतिरित्येव सर्वत्र परिलक्ष्यते ।
शश्वत्सैव प्रयोक्तव्या विद्यते चेज्जिजीविषा ॥४९

जीवन्नेव नरो भाव ! भद्रशतानि पश्यति ।
अवैधेनाथ वैधेन सततं स्याः कृतोद्यमः ॥५०

उपस्थितं परित्यज्य याचता ह्यनुपस्थितम् ।
स्वनाम्नोऽन्वर्थता भाव ! दर्शिता नचिकेतसा ॥५१

भौतिकेष्विह पिण्डेषु योऽनास्थां कुरुते नरः ।
उभयलोक विभ्रष्टो लम्बते स त्रिशङ्कुवत् ॥५२

निसर्गे सर्वतो भाव ! कूटनीतिर्विलोक्यते ।
चित्रको वर्णसाम्याद्धि स्वात्मानं त्रायते वने ॥५३

निसर्गस्य भ्रमञ्चक्रं भ्रामयत्यखिलं जगत् ।
अतो निसर्गसख्येन वर्तनमिह युज्यते ॥५४

यो निसर्गमनादृत्य चरति गतशृंखलम् ।
सोपरागसमावृत्तो जायते शशिसूर्यवत् ॥५५

सूर्योदये हसत्यब्जं रोदित्यस्तं गते खौ । रवौ
कुमुदं वैपरीत्येन निसर्गस्तत्र कारणम् ॥५६

कामात्मता प्रशस्ताङ्ग ! सा मूलं सर्वकर्मणाम् ।
कामो वै मनसो रेतो जगत्स्रष्टुः प्रजापतेः ॥५७

मनस्यग्रे विधेर्जातः कामः कर्मनिमित्तकः ।
भाविभूतभवत्काले व्याप्नोति स निरन्तरम् ॥५८

विश्वं काव्यं कविर्ब्रह्मा रसो वै स इतीह्यते ।
अकामाद्रसहीनाच्च कथं रसासमुद्भवः ॥५९

पर्वतेषु समुद्रेषु सरित्सु वनराजिषु ।
खगेषु यद्धि रम्यत्वं कामस्तत्र निमित्तकम् ॥६०

भाव ! धर्मस्य यत्तत्वं गीतायां समुदीरितम् ।
तस्मिन् पार्थाय संदिष्टं युध्यस्व विगत ज्वरः ॥६१

क्षित्यप्तेजोमरुत्खेषु सर्वत्र परिलक्ष्यते ।
शक्तिमन्तो वलाद्धीनान् घ्नन्ति स्वोदरपूर्तये ॥६२

अजातशत्रुता क्वापि न दृष्टिपथमागता ।
वैरभावो हि सर्वेषां भावानां मूर्ध्नि विद्यते ॥६३

युद्धाय कृतसंकल्पो नरो भवति क्षेमवान् ।
विनाशितोऽन्यथालोके दुर्गतिं भाव ! गच्छति ॥६४

मात्सर्येण नराः सन्ति परिवृताः समन्ततः ।
मार्गसंशोधनं कर्तुं भित्तीनां पातनं ध्रुवम् ॥६५

हरिरपि महायुद्धे शस्त्राग्रहणविश्रुतः ।
सचक्रमभिदुद्राव गहना कर्मणो गतिः ॥६६

जगत्काव्यमिदं सृष्ट्वा तच्छ्रावयितुमुन्मनाः ।
सुरासुरान्नरांश्चैव ससर्ज कविरात्मभूः ॥६७

अतो हि कवयो लोके मार्गयन्ते प्रयत्नतः ।
श्रोतारं सौरिभप्रज्ञं अपि प्रसूतये कृतेः ॥६८

पूर्वं बाधस्ततो योगो लक्षणायां हि सम्भवः ।
अस्मिन् देवस्य सत्काव्ये नेदृशी विषमा स्थितिः ॥६९

शुकवत्काव्यपाठान्न मनस्तृप्तिः प्रजायते ।
परीवादो बुधैस्तस्य क्रियते रसवादिभिः ॥७०

रसना काष्ठतां याति कर्णौ प्रस्तरतुल्यताम् ।
हृदयं मरुतुल्यत्वं कीदृशस्ते कथारसः ॥७१

परेभ्यस्त्रातुमात्मानं भावाः स्नेहदयादिकाः ।
चर्मासिवत् प्रयुज्यन्ते संघर्षे समुपस्थिते ॥७२

संघर्षं उन्नतेर्वर्त्म नास्ति निष्फलता रणे ।
अतो हि हरिणा प्रोक्तं युद्ध्यस्व विगत ज्वरः ॥७३

राजनीत्यां यदि स्नेहं दयां मुञ्चति नायकः ।
लोकाराधनसिद्ध्यर्थं किमन्यदवशिष्यते ? ॥७४

त एव वर्त्म कुर्वन्ति भवतां कण्टकाचितम् ।
येषां कृते भवद्भिर्वै मार्गं त्यक्तं सुखावहम् ॥७५

राष्ट्रयानस्य चक्रे द्वे न्यायशासनसंज्ञिते ।
निखाते भ्रष्टचर्यायाः कर्दमे बलवत्सखे ! ॥७६

चक्रयुग्मं समुद्धर्तुं जनकर्णोऽयत्नतः ।
अनयैः पार्थबाणैर्हि लभते शीर्षकर्तनम् ॥७७

सत्त्वेऽभिज्ञानतां याते क्वास्ते क्षेमो नृरक्षसाम् ।
उद्वेलितो भवेत्सिन्धुः क्वावरोधस्तृणोद्भवः ॥७८

छिन्नशीर्षः कवन्धोऽपि हन्त्यसिना रिपून्रणे ।
मागा भाव! विषादञ्चेत् प्राणाः स्युः कण्ठमागताः ॥७९

मौनमुत्पीडिता ! हित्वा कुरुध्वं चीत्कृतिं मनाक् ।
बीजं वै प्रस्फुटद् भाव ! करोति मृद्विदारणम् ॥८०

सखे! ऽभिजनवन्नोऽद्य जातास्तस्करबान्धवाः ।
इति चीत्कृत्य योब्रूते स वै तस्कर उच्यते ॥८१

सत्यपूतां कथं वाचं हरिश्चन्द्रोऽपि संवदेत् ।
सत्यं प्रियं वचो यत्र मन्यतेऽशिवसंयुतम् ॥८२

जगदिदं कियन्मात्रं भिन्नधर्मैः प्रतीयते ! ।
अद्यापि कुसुमं भाव ! कण्टकेषु प्रजायते ॥८३

पादाघाताद् भुवि क्षिप्तः कथं त्वं व्योम पश्यसि ।
महाशून्यं हि तत्रास्ते मुधा साहाय्य कल्पनम् ॥८४

आत्मदाहस्य वार्ता वै श्रावं श्रावं हि प्रत्यहम् ।
हृदयं व्यथते भूरि कुण्ठिता जायते मतिः ॥८५

चौर्यं सूत्रयितुं यो न याति ह्यारक्षिकालयम् ।
चौरारक्षिकयोः सख्यं ज्ञात्वा स मतिमान्नरः ॥८६

दरिद्रान्भरते मन्त्री श्रुत्वेति वचनं सखे ! ।
हित्वा नवानि वासांसि धत्ते जीर्णान्यमन्दधीः ॥८७

कमलं जायते पङ्कात् तत्र च श्रीर्विराजते ।
इति विचिन्त्य धीमन्तो जायन्ते पङ्कशोभनाः ॥८८

जलं पयो दुग्धञ्चापि पय इत्यभिधीयते ।
पयसा वै पयोयोगः कथं भाव ! निवार्यते ? ॥८९

मुखलेपनकला भाव ! सुप्रशस्ता कला मता ।
मुखलेपान्मृदङ्गोऽपि करोति मधुरध्वनिम् ॥९०

गुरुणामपि सान्निध्ये चित्रहारस्य प्रेक्षणात् ।
म्लानं मा मानसं कार्षीः समत्वं योग उच्यते ॥९१

पितुराज्ञां शिरोधार्य रामोगतस्तपोवनम् ।
पुत्राज्ञया कलौ भाव ! श्रेयसी ते वनस्थितिः ॥९२

लोलुपत्वं विजिह्लत्वं उत्कोचश्चाटुकारिता ।
एतानि जयसूत्राणि प्रवृद्धे जीवनाहवे ॥९३

कस्मैचित्कुरुते नात्र कोऽपि मार्गं विकस्वरम् ।
भूम्यां निपात्यचेद्दन्तुं युज्यते कुरु तन्तथा ॥९४

कुञ्जरो वा नरोवेति सन्देहं स्थापयन् युधि ।
शंखं प्रध्मातवान् योऽङ्ग ! तस्मै धर्मात्मने नमः ॥९५

निमज्जत्यपि चण्डांशौ पश्चिमाब्धौ स्वमायया ।
येनादर्शि स्फुरन्सूर्यस्तस्मै योगात्मने नमः ॥९६

वृत्त्यर्थं प्रत्यहं भाव ! रूपमन्यद् विधीयते ।
हरेर्वै विश्वरुपत्वं मोघं वदन्ति कोविदाः ॥९७

संघर्षेण परिव्याप्ते जगत्यस्मिन् वयस्य ! मे ।
यः क्षणः समुपालब्धस्तं क्षणं मा वृथा कुरू ॥९८

पाहि मां मे गृहाच्चौरा हरन्ति सर्वसम्पदम् ।
इति श्रुत्वापि रक्षायै नायाति मतिमाञ्जनः ॥९९

वध्यमानं नरं वीक्ष्य जघन्यैराततायिभिः ।
यस्यनोद्विजतेचित्तं सवै युक्ततमो मतः ॥१००

तेनाधीतं श्रुतं तेन तेन सम्यगनुष्ठितम् ।
निकारं पृष्ठतः कृत्वा येन स्वार्थः समीहितः ॥१०१

मध्ये धर्मार्थयोर्भाव ! विद्यते महदन्तरम् ।
प्रत्यक्षं फलमर्थस्य धर्मस्य केन वीक्षितम् ॥१०२

सत्यं मेधा च कीर्तिश्च यस्मिञ्जातानि शून्यताम् ।
स लभते जयं लोके नान्यो जीवनविग्रहे ॥१०३

पङ्कात् सुरभिपद्मानि गोयमात्क्रूरवृश्चिकाः ।
कार्यकारणवैधर्म्यात् कुतः सत्कार्यवादता ॥१०४

त्वन्मते जीवनं मित्र ! कापि यात्रा निरन्तरा ।
परमध्वगविश्रान्त्यै किं न गेहमपेक्ष्यते ? ॥१०५

मन्ये नास्मि समोमित्र ! मित्रैः सह गुणोदये ।
पराजितेऽपि न त्यक्ता परं मया स्ववाहिनी ॥१०६

क्वचिन्मारुत - विश्रामो दीपनिर्वापणं क्वचित् ।
जायत इति विज्ञातुं को विरमेन्मृधा सखे ! ॥१०७

चित्रमेतन्न किं भाव ! ये धान्योत्पादनक्षमाः ।
त एवान्नस्य सम्प्राप्त्यै तिष्ठन्त्यावद्धपंक्तयः ॥१०८

गेहं संत्युज्य (॰न्त्य) कस्मात्त्वं दूरं प्रयासि मे प्रिय ! ।
किं न जानासि जायन्ते सिद्धार्था न गृहे गृहे ॥१०९

प्रतीक्षस्व क्षणं मार्गे श्रमार्तं पथिकं प्रिय ! ।
त्वत्तोऽपि वेगगामी यो वृथा तेन समं गतिः ॥११०

हीयते किं प्रभुत्वं ते किं वा तव महार्हता ? ।
यत्त्वया भाषितं कोपात् तदेवोक्तं प्रसादतः ॥१११

मह्यं वितर भो ब्रह्मन् ! किमप्येतादृशं मनः ।
अवसादेऽपि यत्कालं यापयेद् विहसन्निव ॥११२

एकान्ते रोदनं श्रेयो हासो मित्रसमागमे ।
अवसन्नोऽपि निर्वृत्तिं यदि कामपि कांक्षसि ॥११३

रजसोऽपि पदाघातो नोचितो विद्यते प्रिय ! ।
तन्नेत्रं मस्तकं वस्त्रं हन्तुरावृणुते भृशम् ॥११४

दुःखापघातकं सूत्रं अस्माभिः शोधितं प्रिय ! ।
इति वार्तापि सानृता को दोषो यदि कांक्ष्यते ॥११५

भोगान्भोक्तुं वयोहानौ मनो मे प्रसभायते ।
रेखाचित्राणि किं नैव समाकर्षन्ति मानसम् ॥११६

यस्याः पयोऽसकृत्पीतं मातुस्स्तन्य मिवानुषक् ।
शूल्यं तत्सुरभेर्मासं जठरे किं न कम्पते ? ॥११७

युक्तः क्रीणातुमर्थेन पर्यङ्कः सपरिच्छदः ।
कियद् द्रव्यं प्रदातव्यं निद्रायै वद साम्प्रतम् ॥११८

औषधं सुलभं क्वापि भूरिद्रव्यप्रदानतः ।
परं स्वास्थ्यं किमाप्नोति धनदोऽर्थं विकिरन्नपि ॥११९

यानि पुष्पाण्यवाप्तानि चौर्येणोपवनान्मम ।
तानि समर्प्य देवेभ्यः किं पुण्यमर्जितं त्वया ? ॥१२०

पत्रं पुष्पं फलं तोयं दत्तं चौर्येण मन्दिरे ।
गृह्णन् देवः सखे ! किन्न जायते पापभुग् ध्रुवम् ॥१२१

पत्रं पुष्पं फलं तोयं चेन्निस्वाय प्रदीयते ।
चौरवृत्त्यापि तद्भाव ! देवपूजनवच्छुभम् ॥१२२

गृहं मे निकषा भाव ! येन गेहं विनिर्मितम् ।
प्रासादात्प्रेक्षते नित्यं स मत्प्राङ्गणवीरुधः ॥१२३

ऊर्ध्वपादमधश्शीर्षं मानवं वीक्ष्य व्याकुलम् ।
यो ददौ प्रकृताकारं तं मार्क्सं प्रणमाम्यहम् ॥१२४

पारं यास्यामि किं वाहं गमिष्यामि विलीनताम् ।
मयि तरणिरावर्तो मयि कूलञ्च विद्यते ॥१२४

त्वत्साकं गच्छतो हन्त ! वर्षमपि क्षणायते ।
विप्रयोगे क्षणार्धोऽपि हन्त ! मे प्रलयायते ॥१२६

प्रवर्षन्ति निरातङ्कं कीदृशीयं घनच्छटा ? ।
निम्नगेव मयि क्वापि वयस्ये ! सम्प्रतीयते ॥१२७

ह्यं अखिलमाह्निकं दुःखं मह्यं प्रादाद्दिवाकरः ।
यतो ह्यासन् विवृतानि सर्वद्वाराणि मे प्रिये ! ॥१२८

शरद्धास्यं पटे लीनं निदाघे गृहभित्तिषु ।
सान्मुख्यविरहान्मित्र ! सखित्वं नोपपद्यते ॥१२९

अश्रुभिर्दर्शितं भाव ! चेद्गुहितं स न क्षमः ।
किन्तेन पत्रलेखेन व्यथाभार - प्रदर्शिना ॥१३०

मा स्मार्षीः मां दिवा किंवा मा स्वप्नेनिशिनिद्रितः ।
इत्यादिश्य कृतः कस्माद् विरहाग्निसमाकुलः ॥१३१

अस्ति सौख्य प्रदं वस्तु किमपि दुःख संगमे ।
यथा मस्तक - पीडायां चन्दनद्रवलेपनम् ॥१३२

पूर्वं लिखामि ते नाम निरस्यामि ततः परम् ।
अथैकाकी न किं चित्तं पीडयामि पुनः पुनः ॥१३३

द्वयोरपि निशोर्मध्ये न मया वीक्षितो रविः ।
सुदिनमपि मे भाग्याद् दैव ! हा ! दुर्दिनायते ॥१३४

केनोक्तं लोचने भाव ! मौनव्रतसमाश्रिते ।
विवृते हसती दृष्टे संवृते कुर्वती स्वनम् ॥१३५

तृषितैरस्माभिर्भाव ! समानीता नदी स्वयम् ।
सम्प्रत्यसौ समुद्वेलमाप्लावयति नोर्मिहाः ॥१३६

निह्नोतुं निजदारिद्र्यमुपाया भूरिशः कृताः ।
परं वत ! मुखादर्शे तत्स्पष्टं प्रतिबिम्बितम् ॥१३७

पुरा क्वापि गृहाद्दूरं निद्रां लभे न यत्नतः ।
साम्प्रतं यत्र कुत्रापि शये विवर्धित-श्रमः ॥ १३८

पूर्ववद्भावि यामिन्यो मे यास्यन्ति गतार्थताम् ।
मद्भाग्ये लिखितान् स्वप्नान् अन्यस्मै त्वं प्रयच्छसि ॥१३९

अस्माभिर्विप्रलम्भेऽपि न त्यक्ता स्नेहपद्धतिः ।
आपृच्छस्व किमर्थं ते जाता अनुशयार्दिताः ॥१४०

दूरं गतोऽपि भाव ! त्वं मे हृदये कृतास्पदम् ।
दूरं प्रज्वलितो दीपः प्रकाशयति मे गृहम् ॥१४१

महाजनः पथा येन गच्छत्यभीक्ष्णमीरितः ।
भाव ! गड्डरिकानीत्या सैवापथो विधीयते ॥१४२

सद्योजातं प्रियं वत्सं नय त्वं शिशुमन्दिरम् ।
पुस्तकभारवाही स भविता त्वद्भारवाहकः ॥१४३

उच्चशिखरसौधानां सर्वत्रास्ति दृढास्थितिः ।
परं कुत्रापि नाप्नोमि छायां श्रान्तो महापुरौ ॥१४४

पुण्यानि कर्मजातानि नभस्तो वीक्ष्य देवताः ।
पुरः वर्षन्ति पुष्पाणि साम्प्रतं क्व तिरोहिताः ॥१४५

स्वातन्त्र्यदिवसे राष्ट्रकेतनेन्दुमथोच्छ्रितम् ।
वीक्ष्यापि नो समुद्वेलो जायते जन-वारिधिः ॥१४६

दक्षाभभिनये नृत्ये भाव ! कामपि तारिकाम् ।
जना नृत्यन्ति सोल्लासं हन्त! वीक्ष्य समागताम् ॥१४७

तस्करो लभते साम्यं पश्यता मुनिना सह ।
निशायां जागरावङ्ग ! दृष्टावुभौ दिवाशयौ ॥१४८

वृद्धाः पूज्याः परं तेषु लक्ष्यते वैवलवं ननु ।
प अश्वत्थो रसहीनोऽङ्ग ! प्रवर्णो जायते ध्रुवम् ॥१४९

दैवज्ञ ! विद्यतेकोऽपि तव ज्ञाने मतिभ्रमः ।
भौमस्य प्रश्नजातस्य नभस्युत्तरवीक्षणात् ॥१५०

अयं श्वा साम्ययोगस्य प्रशस्तं वै निदर्शनम् ।
पापी स्यादथ पुण्यात्मा प्रभुं रक्षति निष्ठया ॥१५१

शुनाञ्चैव गवाञ्चैव यत् साम्यं समुदीरितम् ।
प्रमाणीकृत्य तत्कोऽत्र विनिमयं चिकीर्षति ? १५२

प्रशस्ता यत्र हि श्वानो विफलास्तत्र धेनवः ।
गावो हि मातृवत्पूज्याः सारमेयास्त्वपावनाः ॥१५३

दिवसे चन्द्रवत् क्षीणं निशायाञ्चैव सूर्यवत् ।
आननो द्वीक्षणं पित्रोर्जातमद्य सुदुर्लभम् ॥१५४

गीतागुरुः सखे ! जातो विषण्णः पार्थवत्सखे ! ।
यादवानां कृतिं वीक्ष्य धर्मग्लानि-प्रवर्धकम् ॥१५५

धर्मस्य स्थापनां कर्तुं इहात्मानं सृजन्नपि ।
हरिः कथं नु वैफल्यं यातस्त्रातुं स्वकं कुलम् ॥१५६

व्याघ्रचर्मासनासीनो मृगचर्मावृतो मुनिः ।
अहिंसाव्रतमाधाय मृगान्करोति निर्भयम् ॥१५७

प्रदत्ता विधिना किन्न साधुता नखरैः सह । ता
दुष्कृतां वै विनाशाय किमर्थं हरिसम्भवः ? ॥१५८

पर्यायः सुमतेरद्य ग्रामता सम्प्रतीयते ।
दोलारुढत्वमुद्याने नातः संलक्ष्यते क्वचित् ॥१५९

या कृष्णा पारदर्शिन्या शाटचावव्रे त्रपुः स्वकम् ।
कर्तुकामो विवस्त्रां तां दुःशासनः करोतु किम् ? ॥१६० दु

दुष्कृतां हि विनाशाय संभवति सदा हरिः ।
ते विजहतु दुष्कृत्यं इति किमस्त्यसाम्प्रतम् ॥१६१

व्योमैकान्तविहार्यद्य विहगस्तरुकोटरे ।
विषण्णः हीनपक्षश्च हरिस्मारं नु प्राणिति ॥१६२

अहं स इत्यहंभावालोपेन क्लिष्टबुद्धयः । ले
कथं हंसोपमास्तेस्युर्नीरक्षीरविवेचकाः ? ॥१६३

चन्द्रलोकं समाक्रान्ता कामानां त्वरिता गतिः ।
परं धर्मगतिर्भाव ! खञ्जपादा भुवि स्थिता ॥१६४

कुमतिः सुमतिर्ज्ञेया यया पुष्ट मिदं वपुः ।
सुमतिनिर्णये किन्न साफल्य वै प्रमाणकम् ॥१६५

कणशो भाव ! विच्छिन्नं मुखं योजयितुं पुनः ।
आदर्शं सन्मुखं कोऽपि धन्ते प्रतीतिदायकम् ॥१६६ त्ते

रामाज्ञया भुवः कन्या वनं याता तपस्विनी ।
इत्याकर्ण्य महीमातुर्हृदयं दीर्णता गतम् ॥१६७

पादाघातप्रतीक्षायां अशोकश्शोकतां गतः ।
प्रतिशाखं न जायन्ते सुमनांसीति व्याकुलः ॥१६८

शेरते निकषा मार्गं भूमिलुण्ठित देहकाः ।
निद्रालाभाय नेच्छन्ति श्रमिका गुटिकां सखे ! १६९

जागरो निशायां यो दिवा च स्वप्नवीक्षकः ।
स भोगी पश्यतो मुनेः श्रेयस्त्वं भजते सखे ! ॥१७०

तां प्राकृतजनवैघुर्यं ख्यापिना वीक्ष्य गीतिषु ।
गिरा नो धूनुते शीर्षं पुरा सन्तापपीडिजा ॥१७१ ता

निष्क्रियो मृत्युमाप्नोति सक्रियोऽमृतमश्नुते ।
ने छिद्यनो तरवः क्षिप्रं डयन्ते पक्षिणोऽम्बरे ॥१७२

लग्नानि तरुशाखासु क्षिप्तानि पितृकानने ।
हसितान्येव वीक्ष्यन्ते सुमनांसि निसर्गतः ॥१७३

विप्रलम्भं वरं मन्ये संयोगात् स्नेहवर्धने ।
विप्रकर्षो हृदादर्शे दूरमन्तः प्रवेशकः ॥१७४

पुष्पाक प्रतीकाशं हृदयं यस्य विद्यते ।
सोऽन्यानपि विजानीते द्वितीयं हृदयं स्वकम् ॥१७५

दिग्भ्रान्तो मा स्म भूरस्मिन् राजनीति-प्रभञ्जने ।
स्वकीयां संस्कृतिं भाव ! रक्ष रक्ष प्रताडिताम् ॥१७६

ओमित्येकाक्षरं नाम ब्रह्मणः समुदीर्यते ।
अवनाद्रक्षणात्कस्माद् भक्तस्य तत् प्रसिद्ध्यति ॥१७७

अनभ्यस्तविद्या बाल्ये यौवने धनलोलुपाः ।
वार्धकेऽपि विलोभ्यन्ते जना विषयकांक्षिणः ॥१७८

पितरौ यत्र साहाय्यं कर्तुमर्थेन न क्षमौ ।
तत्र गेहेऽपि सन्त्रस्तौ तिष्ठतो निजसन्ततेः ॥१७९

गुणो वा यदि वा शीलं प्रेमबन्धे न कारणम् ।
तद्वद्धृत्यत्र प्रमेयः कः सोपाधिको न विद्यते ॥१८०

न किञ्चिदपि कुर्वाणः कथं सौख्यं प्रयच्छति ? ।
कर्म शीलसमासक्तं प्रियत्वे कारणं यतः ॥१८१

गन्धवत्वं न किं भूमेर्लक्षण मुच्यते बुधैः ।
सगन्धत्वं सखे ! येन जनेष्वस्ति प्रतिष्ठितम् ॥१८२

रिपून्नाशयितुं भाव ! किमर्थं यतसे भृशम् ।
एकाकी भोभुक् किन्न विषमेनो हि भुञ्जते ॥१८३

परोऽपि प्रत्ययः पूर्वं सानुबन्धः समीह्यते ।
सर्वापहारि - लोपेऽपि सुस्थितिर्यत्र दृश्यते ॥१८४

सर्वेभ्यः प्रभुणा दत्तः कोऽप्यशो निजतेजसः ।
प्रथभावरताभेदरज्ञैर्हि प्रतिपाद्यते ॥१८५

अणुप्रमाणबीजेषु गुप्ताः सन्ति महावटाः ।
सूक्ष्मा इत्यवमन्तव्या जनाः किं बलवत्तरैः ॥१८६

वंशकाण्डे कठोरेऽपि रन्ध्रं कर्तुं सदाक्षमः ।
पद्मकारामहो प्रेम्णो भृङ्गश्च्छेत्तुं न व्याकुलः ॥१८७

सर्वे ते कृतिनो वन्द्यार्यैरेषणागतस्पृहैः ।
कण्टकितं जगद्वर्त्म व्यधायि कुसुमाचितम् ॥१८८

हरेः पदक्रमो येन नालक्षि पदचित्तया ।
पाणिनेस्तस्य पादाभ्यां नमोवाकं प्रशास्महे ॥१८९

वर्णमैत्र्या न सौन्दर्यं भूयसा वर्धते प्रिये ! ।
वक्षसि चन्दनालेपो गन्धेनैव प्रतीयते ॥१९०

केशेषु मालती माला भाले मृगमदच्छटा ।
सौन्दर्यं वृद्धिमायाति वर्णवैषम्य दर्शनात् ॥१९१

कालिन्दी कज्जलश्यामा जाह्नवी चन्दनोज्जवला ।
सरस्वती च लाक्षाया तवाङ्गे राजते शुभे ! ॥१९२

कज्जलमङ्गराजश्च लाक्षारस – विभूषणे ।
एतेषां समवायेऽपि सौन्दर्यं क्वोपलभ्यते ॥१९३

पुष्पालङ्कृतशाखासु येन नीडं विनिर्मितम् ।
नूनं विस्मरितं तेन दवाग्निर्जायते क्वचित् ॥१९४

उदयाद्रि – समारुढ़: पतद्वा पश्चिमोदधौ ।
वृहद्वपू रर्कोदृष्टो महतां क्वास्ति खर्वता ? ॥१९५

मृत्स्नेहवर्ति – संयोगो ज्वलनात्पूर्वमिष्यते ।
ततो दीप: प्रदीपस्य संज्ञया परिचीयते ॥१९६

चञ्चूर्यापावना जाता पलमुत्कृत्य सर्वदा ।
रावणस्याननं दीर्त्वा साभूद्धन्या जटायुष: ॥१९७

दशाननं नरवैर्दन्तैश्छिन्नन्तीं वीक्ष्य जानकीम् ।
तस्य मुहुः पले सक्ता दृष्टि: सफलतांगता ॥१९८

मालाभि: कन्धरा पूर्वं यैर्जनै: समलङ्कृता ।
ग्रावहस्तैरहं भाव ! तैरेवाप्रियतेऽधुना ॥१९९ वि

कुर्वाण: पादसंचारं वीथ्यामत्र युवा सखे ! ।
परावृत्य मुखं भूयो वीक्षते प्रमदाजनम् ॥२००

किञ्चोभयत उद्यानं विकासिकुसुमोच्चयम् ।
वीक्ष्य सप्रसभं हर्तुं चेष्टते लोभविह्वल: ॥२०१

सौन्दर्यं मोहसम्पृक्तं शिवेतराय कल्पते ।
पुष्पाणां सुमुखीनाञ्च हरणं निन्दितं स्मृतम् ॥२०२

अव्ययमद्वितीयञ्च निरुपधि च निर्गुणम् ।
ब्रह्म विषण्णातां पेदे वीक्ष्यात्मानमेककम् ॥२०३

सुखं भूमनि विन्यस्तं कुत्राल्पे सुखमीर्यते ।
इति विचिन्त्य भूयस्त्वे मतिं चक्रे प्रजापति: ॥२०४

जीवसृष्टे: समारम्भे याऽसं जाताद्यकोशिका ।
साभून्मनसि विक्षुब्धा संवीक्ष्यात्मानमेकधा ॥२०५

स्वाङ्गभङ्गे महत्कष्टं विजानत्त्यपि सा द्विधा । न्त्य
स्वदेहमकरोद्भाव ! नैकाकी लभते सुखम् ॥२०६

मदिरालय – द्वाराणामुद्घाटनपटुस्वरम् ।
पूर्वं शंखध्वनेर्भाव ! देवालये शृणोम्यहम् ॥२०७

पूजां समाप्य वै क्षिप्रं पुरोधा मदिरालयम् ।
जिगमिषुर्मया दृष्टो लोकद्वयविचक्षणः ॥२०८

मन्दिरे हरिपादोदं यो वितरति भक्तितः ।
स्वगेहे सैव मैरेयं मधुपेभ्यः प्रयच्छति ॥२०९

त्रिगुणानां त्रिपार्श्वं वै स्पृशन्ती शुभ्रदीधितिः ।
जायते सप्तवर्णाभा हरति योगिनां मनः ॥२१०

बद्ध्वा त्रैगुण्यसन्दानात् प्रकृतीयं महानटी ।
कं कं न नर्तयत्यङ्ग ! सूत्रधारेण सूत्रिता ॥२११

मायेयं हि महादेवं कण्ठे शिरसि वक्षसि ।
त्रैगुण्यगुणैर्बद्ध्वा प्रवर्तयति वाग्विधौ ॥२१२

नैकान्ततः किमप्यस्ति सुभगं दुर्भगं सखे ! ।
गुणाधिक्यं समाधत्ते मनसो वेदनीयताम् ॥२१३

तमस्युत्कर्षतां याते जहे सीतां दशाननः ।
सत्वाधिक्याथ वाल्मीकिः सीतां निन्ये निजाश्रमम् ॥२१४

रजस्युग्रे च रामोऽपि लोभाकृष्टो विमूढवत् ।
हेमभृगं जघानाङ्ग ! गुणानां बन्धनं महत् ॥२१५

एकार्द्धे कज्जलश्यामा शेषार्द्धेशोणशोभना ।
अन्तःश्वेता च गुञ्जेयं त्रैगुण्ये सुप्रतिष्ठिता ॥२१६

यस्मिन् पथि पदं धत्ते जनोऽयं भृशमर्दितः ।
सैव याति सुदीर्घत्वं कीदृशीयं विडम्बना ? ॥२१७

सहकारः कथं भाव ! वेष्टितः कण्टकिद्रुमैः ।
कण्ठः परभृतां किन्तु जायते कण्टकाहतः ॥२१८

व्योमैकान्तविहारी त्वं जातः पञ्जरवेष्टितः ।
वचसां ननु माधुर्याद् गुणोऽपि किन्तु प्रीतये ॥२१९

अन्यत्र चित्तमन्यत्र बुद्धिरन्यत्र दर्शनम् ।
महात्मना किलानेन भावाद्वैतं विभाजितम् ॥२२०

प्रदिशो हिमसंकीर्णा रक्षाग्निकणमग्रिमम् ।
अन्त्येष्टिं विना भाव ! पाण्डवा नरकं गताः ॥२२१

ख्य एक एव द्रुमोऽश्वत्थश्छायासौख्यं प्रयच्छति ।
किमनेन विभागेन मूलशाखाविधायिनाशा ? ॥२२२

रो सरसं पादपस्कन्ध - मारुतेह दृढंलता लतेयं ।
नीरसं वीक्ष्य तं चाद्य स्थाणुं मत्वा न मुञ्चति ॥२२३

जु प्रशस्तप्रतिभानुष्टा देशान्तरे प्रतिष्ठिताः ।
ऋणं विस्मार्य भूमात्रोर्लभन्ते किं यशः सखे ? ॥२२४

अस्मिन् ग्रामे तृषार्तेभ्यः शिशिराम्भ ददौ वधूः ।
स्वयं कूपात् समुद्धत्य प्रपापालिकया सह ॥२२५

तस्मिन्नेव कियत्कालं स्थापितं ग्रामसंसदा ।
जलनालं पृषदल्पं ग्रामबध्वै ददाति कम् ॥२२६

अधः समागतं व्योम यदि कोऽपि स्पृशेन्मनाक् ।
किं तेन मनसि ध्येयं तद् वै वामनतांगतम् ॥२२७

विहाय यां तरोश्शाखामुत्पपात खगो दिवि ।
वेपमाना कियत्कालं सा तस्थौ मर्मसीदिता ॥२२८

ग्राव्णः कणं जले क्षिप्त्वा वीक्षमाणोर्मिवर्तुलान् ।
किं सौख्यं लभसे भाव ! कुत्रास्ते ते सुवृत्तता ? ॥२२९

छायातपौ नियम्येते लोके ननु दशान्तरम् ।
तपसि रोचते छाया शरदि चातपः सखे ! ॥२३०

ओषधीनां पतिश्चन्द्रः क्षयित्वं विजहाति न ।
क्षैण्यस्वीकरणं श्रेयश्चेददेवा सन्ति याचकाः ॥२३१

वृद्धानां चरितं नाङ्ग ! विचारक्षोदमीहते ।
त्रे अहल्योद्धार एकत्र चान्यत्र ताडकावधः ॥२३२

पूर्वागतो जनो भाव ! सेवाभादौ समश्नुते ।
नैष न्यान्यो मया दृष्टो यमाधिकृत शासने ॥२३३

तनयाः पितृपूर्वं च गच्छन्तीह पितुर्वनम् ।
वृद्धाश्च शवयात्रासु दृश्यन्ते विनिवर्तिताः ॥२३४

मुक्तेयं सर्वतः शुक्ला सुवृत्ता च समुज्ज्वला ।
स्वत्मानं रश्मिभिर्बध्वा ग्रीवां बध्नाति योषिताम् ॥२३५

वीक्ष्य सगन्धमायान्तं भषते सपलवत् ।
सैव पिण्डदमालोक्य पुच्छलोलं नुनूषति ॥२३६

स्रोतांसिचिद् गिरिस्थानि शुष्यन्ति रसदायीनि ।
औपत्यकानि मृग्यन्ते पयः पीयूषकांक्षिभिः ॥२३७

परमा आतिथेये यें ख्याता आसन्पुरा क्षितौ ।
भिक्षापात्रं करे धृत्वा तेऽटन्ति सप्तसिन्धुषु ॥२३८

वादयन्तयहोवंशी तापिच्छभूतिशेखरम् ।
पीताम्बरं हरिं वीक्ष्य कक्कुरोभषते कथम् ? ॥२३९

कण्टकानि परिहृत्स जना अटन्त्यनाभयम् ।
वयं हित्वापि पुष्पाणि न जाताः सुखभेधिनः ॥२४०

वातायनं गवाक्षञ्च संवृत्य च स्वचक्षुणी ।
गेहे च तमसाच्छन्ते किमन्तस्त्वं निरीक्षसे ? ॥२४१

वातायनं गवाक्षञ्च संवृत्य च स्वचक्षुषी ।
गेहे च ज्योतिषा पूर्णे यदि पश्यसि पश्यसि ॥२४२

अजाभिर्विभिश्चैव मृगैर्गोभिनिरन्तरम् ।
भक्ष्यमाणापि निर्बाधं दूर्वेयं तरुणायते ॥२४३

अतो हि देवपूजायां पितृणाञ्चैव तर्पणे ।
प्राशस्त्यं लभते दूर्वा धन्या सत्वैकनिष्ठिता ॥२४४

सूचीभेद्यं तमोभाव ! मद्देहे प्रसृतं घनम् ।
मामन्तरेण कोऽप्यन्यो न दीपदीपनः स्मृतः ॥२४५

शुक्लवर्णः कपोतोऽयं शान्तिदूत इवाम्बरे ।
अडीयत त्वया भाव ! न पराववृते क्षितौ ॥२४६

अनभ्यासाद्वाण्यां स्खलनबहुलत्वं प्रतिपदे,
तथैवास्ति काव्ये समधिकवयस्यस्मिन्ननघजने ।
कृमिक्लिष्टं रत्नं न खलु भजते धूलिसमतां,
विभिन्नाभिर्भाभिः कमपिमुदमेव प्रतनुते ॥२४७
(हृदि कमपि मोदं हि तनुते)

इति विचिन्त्य किंकाव्यं भावगीताभिधं सखे ! ।
अर्पयित्वाभिरुपेभ्यः प्रमुमुदेऽन्तरात्मनि ॥२४८

च्युतसंस्कृतिभूयस्त्वं भावोत्कर्षमनागपि ।
वीक्ष्य चेज्जायते हर्षः सफला विफलाकृतिः ॥२४९

卐